ऽएष यदाग्नीध्रस्तस्मादेवं प्राश्नाति ॥४१॥ अथ यत्राशिषमाशास्ते । तज्जपति मयीदमिन्द्र इन्द्रियं दधात्वस्मान्रायो मघवानः सचन्ताम् अस्माकꣳ सन्त्वाशिषः सत्या नः सन्त्वाशिष इत्याशिषामेवैष प्रतिग्रहस्तया एवात्रऽर्त्विजो यजमानायाशिष आशासते ता एवैतत्प्रतिगृह्यात्मन्कुरुते ॥४२॥ अथ पवित्रयोर्मार्जयन्ते । पाकयज्ञियेयेव वाऽएतदिडयाचारिषुः पवित्रपूता यदत ऊर्ध्वमसꣳस्थितं यज्ञस्य तत्तनवामहाऽइति तस्मात्पवित्रयोर्मार्जयन्ते ॥४३॥ अथ ते पवित्रे प्रस्तरेऽपिसृजति । यजमानो वै प्रस्तरः प्राणोदानौ पवित्रे यजमाने तत्प्राणोदानौ दधाति तस्मात्ते पवित्रे प्रस्तरेऽपिसृजति ॥४४॥ ब्राह्मणम् ॥३ [८.१.]॥ ॥

ते वाऽएतेऽउल्मुकेऽउद्वहन्ति । अनुयाजेभ्यो यातयामेव वाऽएतदग्निर्भवति देवेभ्यो हि यज्ञमूहिवान्भवत्ययातयाम्न्यनुयाजांस्तनवामहाऽइति तस्माद्वाऽएते ऽउल्मुकेऽउद्वहन्ति ॥१॥ ते पुनरनुसꣳस्पर्शयन्ति । पुनरेवैतदग्निमाप्याययन्त्ययातयामानं कुर्वन्त्ययातयाम्नि यदत ऊर्ध्वमसꣳस्थितं यज्ञस्य तत्तनवामहाऽइति तस्मात्पुनरनुसꣳस्पर्शयन्ति ॥२॥ अथ समिधमभ्यादधाति । समिन्द्धऽएवैनमेतत्समिद्धे यदत ऊर्ध्वमसꣳस्थितं यज्ञस्य तत्तनवामहाऽइति तस्मात्समिधमभ्यादधाति ॥३॥ ताꣳ होतानुमन्त्रयते । एषा तेऽअग्ने समित्तया वर्धस्व चा च प्यायस्व वर्धिषीमहि च वयमा च प्यासिषीमहीति तद्यथैवादः समिध्यमानायान्वाहैवमेवैतदन्वाह तदेतद्धोतुः कर्म स यदि मन्येत न होता वेदेत्यपि स्वयमेव यजमानोऽनुमन्त्रयेत ॥४॥ अथ संमार्ष्टि । पुनन्त्येवैनमेतत्पुनन्तो यदत ऊर्ध्वमसꣳस्थितं यज्ञस्य तद्वहादिति तस्मात्संमार्ष्टि सकृत्सकृत्संमार्ष्टि त्रिस्त्रिर्वाऽअग्रे देवेभ्यः संमृजन्ति नेत्तथा करवाम यथा देवेभ्य इति तस्मात्सकृत्सकृत्संमार्ष्ट्यजामितायै जामि ह कुर्याद्यत्त्रिः पूर्वं त्रिरपरं तस्मात्सकृत्सकृत्संमार्ष्टि ॥५॥ स संमार्ष्टि । अग्ने वाजजिद्वाजं त्वा ससृवाꣳसं वाजजितꣳ संमार्ज्मीति सरिष्यन्तमिति वाऽअग्रऽआह सरिष्यन्निव

ह्हि तर्हि भवत्यथात्र समृवाꣳसमिति समृवेव ह्यत्र भवति तस्मादाह समृवाꣳस-
मिति ॥६॥ अथानुयाजान्यजति । या वाऽएतेन यज्ञेन देवता ह्वयति याभ्य एष
यज्ञस्तायते सर्वा वै तत्ता इष्टा भवन्ति तद्यत्तासु सर्वास्विष्टास्वथैतत्पश्चेवानुयज-
ति तस्मादनुयाजा नाम ॥७॥ अथ यदनुयाजान्यजति । छन्दाꣳसि वाऽअनुयाजाः
पशवो वै देवानां छन्दाꣳसि तद्यथेदं पशवो युक्ता मनुष्येभ्यो वहन्त्येवं छन्दाꣳसि
युक्तानि देवेभ्यो यज्ञं वहन्ति तद्यत्र छन्दाꣳसि देवान्त्समतर्पयन्नथ छन्दाꣳसि देवाः
समतर्पयंस्तदतस्तत्प्रागभूद्यच्छन्दाꣳसि युक्तानि देवेभ्यो यज्ञमवाक्षुर्यदेनान्त्समती-
तृपन् ॥८॥ अथ यदनुयाजान्यजति । छन्दाꣳसि वाऽअनुयाजाश्छन्दाꣳस्येवैतत्संतर्प-
यति तस्मादनुयाजान्यजति तस्माद्येन वाहनेन धावयेत्तद्विमुच्य ब्रूयात्पाययतैन-
त्सुहितं कुरुतेत्येष उ वाहनस्यापह्नवः ॥९॥ स वै खलु बर्हिः प्रथमं यजति ।
तद्धि कनिष्ठं छन्दः सद्गायत्री प्रथमा छन्दसां युज्यते तदु तद्वीर्येणैव यच्छ्येनो भूत्वा
दिवः सोममाहरत्तदयथायथं मन्यन्ते यत्कनिष्ठं छन्दः सद्गायत्री प्रथमा छन्दसां यु-
ज्यतेऽथात्र यथायथं देवाश्छन्दाꣳस्यकल्पयन्ननुयाजेषु नेत्पापवस्यसमसदिति ॥१०॥
स वै खलु बर्हिः प्रथमं यजति । अयं वै लोको बर्हिरोषधयो बर्हिरस्मिन्नेवैत-
ल्लोकऽओषधीर्दधाति ता इमा अस्मिंल्लोकऽओषधयः प्रतिष्ठितास्तदिदꣳ सर्वं ज-
गदस्यां तेनेयं जगती तज्जगतीं प्रथमामकुर्वन् ॥११॥ अथ नराशꣳसं द्वितीयं य-
जति । अन्तरिक्षं वै नराशꣳसः प्रजा वै नरस्ता इमा अन्तरिक्षमनु वावद्यमानाः
प्रजाश्चरन्ति यद्वै वदति शꣳसतीति वै तदाहुस्तस्मादन्तरिक्षं नराशꣳसोऽन्तरिक्षमु
वै त्रिष्टुप्तत्त्रिष्टुभं द्वितीयामकुर्वन् ॥१२॥ अथाग्निरुत्तमः । गायत्री वाऽअग्निस्तद्गा-
यत्रीमुत्तमामकुर्वन्नेवं यथायथेन क्लृप्तेन छन्दाꣳसि प्रत्यतिष्ठंस्तस्मादिदमपापवस्यसम्
॥१३॥ देवान्यजेत्येवाध्वर्युराह । देवं-देवमिति सर्वेषु होता देवानां वै देवाः सन्ति
छन्दाꣳस्येव पशवो ह्येषां गृहा हि पशवः प्रतिष्ठो हि गृहाश्छन्दाꣳसि वाऽअनु-

यजास्तस्माद्देवान्यजेत्येवाध्वर्युराह देवं देवमिति सर्वेषु होता ॥१४॥ वसुवने वसुधेयस्येति । देवताया ऽएव वषट्क्रियते देवतायै हूयते न वा ऽअत्र देवतास्त्यनुयाजेषु देवं बर्हिरिति तन्न नाग्निर्नेन्द्रो न सोमो देवो नराशꣳस इति न्वत एकं चन यो वा ऽअत्राग्निर्गायत्री स निदानेन ॥१५॥ अथ यद्वसुवने वसुधेयस्येति यजति । अग्निर्वै वसुवनिरिन्द्रो वसुधेयो ऽस्ति वै छन्दसां देवतेन्द्राग्नी ऽएवैवनु हैतद्देवताया ऽएव वषट्क्रियते देवतायै हूयते ॥१६॥ अथोत्तममनुयाजमिष्ट्वा समानीय जुहोति । प्रयाजानुयाजा वा ऽएते तद्यथैवादः प्रयाजेषु यजमानाय द्विषन्तं भ्रातृव्यं बलिꣳ हारयत्यत्त ऽआद्यं बलिꣳ हारयत्येवमेवैतदनुयाजेषु बलिꣳ हारयति ॥१७॥ ब्राह्मणम् ॥४ [८. २.]॥ षष्ठः प्रपाठकः ॥ कण्डिकासंख्या १११ ॥ ॥

स वै स्रुचौ व्यूहति । अग्नीषोमयोरुज्जितिमनूज्जेषं वाजस्य मा प्रसवेन प्रोहामीति जुहूं प्राचीं दक्षिणेन पाणिनाग्नीषोमौ तमपनुदतां योऽस्मान्द्वेष्टि यं च वयं द्विष्मो वाजस्यैनं प्रसवेनापोहामीत्युपभृतं प्रतीचीꣳ सव्येन पाणिना यदि स्वयं यजमानः ॥१॥ यद्यु ऽअध्वर्युः । अग्नीषोमयोरुज्जितिमनूज्जयत्वयं यजमानो वाजस्यैनं प्रसवेन प्रोहाम्यग्नीषोमौ तमपनुदतां यमयं यजमानो द्वेष्टि यश्चैनं द्वेष्टि वाजस्यैनं प्रसवेनापोहामीति पौर्णमास्यामग्नीषोमीयꣳ हि पौर्णमासꣳ हविर्भवति ॥२॥ अथामावास्यायाम् । इन्द्राग्न्योरुज्जितिमनूज्जेषं वाजस्य मा प्रसवेन प्रोहामीन्द्राग्नी तमपनुदतां योऽस्मान्द्वेष्टि यं च वयं द्विष्मो वाजस्यैनं प्रसवेनापोहामीति यदि स्वयं यजमानः ॥३॥ यद्यु ऽअध्वर्युः । इन्द्राग्न्योरुज्जितिमनूज्जयत्वयं यजमानो वाजस्यैनं प्रसवेन प्रोहामीन्द्राग्नी तमपनुदतां यमयं यजमानो द्वेष्टि यश्चैनं द्वेष्टि वाजस्यैनं प्रसवेनापोहामीत्यमावास्यायामैन्द्राग्नꣳ ह्यामावास्यꣳ हविर्भवत्येवं यथादेवतं व्यूहति तद्यदेवं व्यूहति ॥४॥ यजमान एव जुहूमनु । योऽस्मा ऽअरातीयति स उपभृतमनु प्राञ्चमेवैतद्यजमानमुदूहत्यपाञ्चं तमपोहति योऽस्मा

ऽअरातीयत्यत्तेव जुहूमन्वाय्य उपभृतमनु प्राञ्चमेवैतदत्तारमुदूहत्यथाद्यमाद्यमपो-
हति ॥५॥ तद्वाऽएतत् । समानऽएव कर्मन्व्याक्रियते तस्मादु समानादेव पुरु-
षादत्ता चाद्यश्च जायेतेऽइदᳪ हि चतुर्थे पुरुषे तृतीये संगच्छामहऽइति विदेवं दी-
व्यमाना जात्या आसतऽएतस्मादु तत् ॥६॥ अथ जुह्वा परिधीन्त्समनक्ति । यथा
देवेभ्योऽहौषीद्यथा यज्ञᳪ समतिष्ठिपत्तयैवैतत्परिधीन्प्रीणाति तस्माज्जुह्वा परिधी-
न्त्समनक्ति ॥७॥ स समनक्ति । वसुभ्यस्त्वा रुद्रेभ्यस्त्वादित्येभ्यस्त्वेत्येते वै त्रया देवा
यद्वसवो रुद्रा आदित्या एतेभ्यस्त्वेत्येवैतदाह ॥८॥ अथ परिधिमभिपद्याश्रावयति ।
परिधिभ्यो ह्येतदाश्रावयति यज्ञो वाऽआश्रावणं यज्ञेनैवैतत्प्रत्यक्षं परिधीन्प्रीणा-
ति तस्मात्परिधिमभिपद्याश्रावयति ॥९॥ स आश्राव्याह । इषिता दैव्या होतार
इति दैव्या वाऽएते होतारो यत्परिधयोऽग्नयो ह्येष्टा दैव्या होतार इत्येवैतदाह
यदाहेषिता दैव्या होतार इति भद्रवाच्यायेति स्वयं वाऽएतस्मै देवा युक्ता भव-
न्ति यत्साधु वदेयुर्यत्साधु कुर्युस्तस्मादाह भद्रवाच्यायेति प्रेषितो मानुषः सूक्तवा-
कायेति तदिमं मानुषᳪ होतारᳪ सूक्तवाकाय प्रसौति ॥१०॥ अथ प्रस्तरमादत्ते ।
यजमानो वै प्रस्तरस्तद्यत्रास्य यज्ञोऽगंस्तदेवैतद्यजमानᳪ स्वगाकरोति देवलोकं
वाऽअस्य यज्ञोऽगन्देवलोकमेवैतद्यजमानमपिनयति ॥११॥ स यदि वृष्टिकामः
स्यात् । एतेनैवाददीत संजानाथां द्यावापृथिवीऽइति यदा वै द्यावापृथिवी संजा-
नाथेऽअथ वर्षति तस्मादाह संजानाथां द्यावापृथिवीऽइति मित्रावरुणौ त्वा वृ-
ष्ट्यावतामिति तयो वर्षस्येष्टे स त्वा वृष्ट्यावविवत्येवैतदाहायं वै वर्षस्येष्टे योऽयं
पवते सोऽयमेक-इवैव पवते सोऽयं पुरुषेऽन्तः प्रविष्टः प्राङ् प्रत्यङ् ताविमौ
प्राणोदानौ प्राणोदानौ वै मित्रावरुणौ तद्य एव वर्षस्येष्टे स त्वा वृष्ट्यावविवत्ये-
वैतदाह तमेतेनैवाददीत यदा ह्येव कदा च वृष्टिः समिव तमनक्त्याहुतिमेवैत-
त्करोत्याहुतिर्भूत्वा देवलोकं गच्छादिति ॥१२॥ स वाऽअग्रं जुह्वामनक्ति । मध्य-

मुपभृति मूलं ध्रुवायामग्रमिव हि जुहूर्मध्यमिवोपभृन्मूलमिव ध्रुवा ॥१३॥ सो
ऽनक्ति । व्यन्तु वयोऽक्तꣳ रिहाणा इति वय एवैनमेतद्भूतमस्मान्मनुष्यलोकाद्दे-
वलोकमभ्युत्पातयति तन्नीचैरिव हरति द्यं तद्यस्मान्नीचैरिव हरेद्यजमानो वै
प्रस्तरोऽस्याऽएवैनमेतत्प्रतिष्ठायै नोद्धन्तीह्योऽएव वृष्टिं नियच्छति ॥१४॥ स हर-
ति । मरुतां पृषतीर्गच्छेति देवलोकं गच्छेत्यैवैतदाह यदाह मरुतां पृषतीर्गच्छेति
वशा पृश्निर्भूत्वा दिवं गच्छ ततो नो वृष्टिमावहेतीयं वै वशा पृश्निर्यदिदमस्यां मू-
लि चामूलं चान्नाद्यं प्रतिष्ठितं तेनेयं वशा पृश्निरियं भूत्वा दिवं गच्छेत्यैवैतदाह
ततो नो वृष्टिमावहेति वृष्टाद्वाऽऊर्ग्रसः सुभूतं जायते तस्मादाह ततो नो वृ-
ष्टिमावहेति ॥१५॥ अथैकं तृणमपगृह्णाति । यजमानो वै प्रस्तरः स यत्कृत्स्नं प्र-
स्तरमनुप्रहरेत्क्षिप्रे ह यजमानोऽमुं लोकमियात्तथो ह यजमानो ज्योग्जीवति
यावद्ध्वास्येह मानुषमायुस्तस्माऽएवैतदपगृह्णाति ॥१६॥ तन्मुहूर्तं धारयित्वानुप्र-
हरति । तद्यत्रास्येतर आत्मागंस्तदेवास्यैतद्गमयत्यथ यन्नानुप्रहरेदन्तरियाद्ध यज-
मानं लोकात्तथो ह यजमानं लोकान्नान्तरेति ॥१७॥ तं प्राञ्चमनुसमस्यति । प्रा-
ची हि देवानां दिगथोऽउदञ्चमुदीची हि मनुष्याणां दिक्तमङ्गुलिभिरिव योयुप्येरन्न
काष्ठैर्दारुभिर्वाऽइतरꣳ शवं व्युषन्ति नेत्तथा करवाम यथेतरꣳ शवमिति तस्मा-
दङ्गुलिभिरिव योयुप्येरन्न काष्ठैर्यदा होता सूक्तवाकमाह ॥१८॥ अथाग्नीदाहानुप्र-
हरेति । तद्यत्रास्येतर आत्मागंस्तदेवास्यैतद्गमयेत्यैवैतदाह तूष्णीमेवानुप्रहृत्य च-
क्षुष्पा अग्नेऽसि चक्षुर्मे पाहीत्यात्मानमुपस्पृशति तेनोऽअग्न्यात्मानं नानुप्रवृणक्ति
॥१९॥ अथाह संवदस्वेति । संवादयैनं देवैरित्यैवैतदाहागानग्नीदित्यगन्वल्वित्यै-
वैतदाहागन्नितीतरः प्रत्याह श्रावयेति तं वै देवैः श्रावय तमनुबोधयेत्यैवैतदाह
श्रौषडिति विदुर्वाऽएनमनु वाऽएनमभुत्सतेत्यैवैतदाहैवमध्वर्युश्चाग्नीध्रश्च देवलोकं
यजमानमपिनयतः ॥२०॥ अथाह स्वगा दैव्या होतृभ्य इति दैव्या वाऽएते हो-

तारो यत्परिधयोऽग्नयो हि तानेवैतत्स्वगाकरोति तस्मादाह स्वगा दैव्या हो-तृभ्य इति स्वस्तिर्मानुषेभ्य इति तदस्मै मानुषाय होत्रेऽकलामाशास्ते ॥२१॥ अथ परिधीननुप्रहरति स मध्यममेवाग्रे परिधिमनुप्रहरति यं परिधिं पर्यधत्था अग्ने देव पणिभिर्गुह्यमानः तं तऽएतमनु जोषं भराम्येष नेदपचेतयाताऽइत्यग्नेः प्रियं पाथोऽपीतमितीतरावनुसमस्यति ॥२२॥ अथ जुहूं चोपभृतं च संप्रगृह्णाति। अदो देवाकृतिं करोति यदनयाकृतिर्भूत्वा देवलोकं गछादिति तस्माज्जुहूं चोप-भृतं च संप्रगृह्णाति ॥२३॥ स वै विश्वेभ्यो देवेभ्यः संप्रगृह्णाति। यद्वाऽअनादिष्ट देवतायै हविर्गृह्यते सर्वा वै तस्मिन्देवता अपिविन्यो मन्यन्ते न वाऽएतत्कस्यै चन देवतायै हविर्गृह्णन्नादिशति यदाज्यं तस्माद्विश्वेभ्यो देवेभ्यः संप्रगृह्णात्येतद्व वैश्वदेवꣳ हविर्यज्ञे ॥२४॥ स संप्रगृह्णाति ॥ संस्रवभागा स्थेषा बृहन्त इति संꣳ-स्रवो ह्येव खलु परिशिष्टो भवति प्रस्तरेष्ठाः परिधेयाश्च देवा इति प्रस्तरश्च हि परिधयश्चानुप्रहृता भवन्तीमां वाचमभि विश्वे गृणन्त इत्येतद्व वैश्वदेवं करोत्यास-द्यास्मिन्बर्हिषि मादयध्वꣳ स्वाहा वाडिति तद्यथा वषट्कृतꣳ हुतमेवमस्यैतद्भव-ति ॥२५॥ स यस्यानसो हविर्गृह्णन्ति। अनसस्तस्य धुरि विमुञ्चन्ति यतो युनज्माम ततो विमुञ्चामिति यतो ह्येव युञ्जन्ति ततो विमुञ्चन्ति यस्यो पात्र्यै स्यो तस्य यतो युनज्माम ततो विमुञ्चामिति यतो ह्येवं युञ्जन्ति ततो विमुञ्चन्ति ॥२६॥ युक्तौ ह वाऽएते यज्ञस्य यत्स्रुचौ। तेऽएतद्युक्ते यत्प्रचरति स यं निधायावद्येद्यथा वा-हनमवार्छेदेवं तत्तेऽएतत्स्विष्टकृति विमोचनमागछतस्ते तत्सादयति तद्विमुञ्चति तेऽएतत्पुनः प्रयुङ्क्तेऽनुयाजेषु सोऽनुयाजेश्वरिवैतद्विमोचनमागछति ते तत्सादयति तद्विमुञ्चति तेऽएतत्पुनः प्रयुङ्क्ते यत्संप्रगृह्णाति तस्यां गतिमभियुङ्क्ते तां गतिं गत्वा विमुञ्चते यज्ञं वाऽअनु प्रजास्तस्मादय पुरुषो युङ्क्तेऽथ विमुञ्चतेऽथ युङ्क्ते तस्यां ग-तिमभियुङ्क्ते तां गतिं गत्वाततो विमुञ्चते स सादयति घृताची स्थो धुर्यौ पातꣳ

सुभ्रे स्थः सुभ्रे मा धत्तमिति साध्वी स्थः साधौ मा धत्तमित्येवैतदाह ॥२७॥ ब्राह्मणम् ॥१[८.३.]॥ ॥ अध्यायः ॥८॥ ॥

स यत्राह । इषिता दैव्या होतारो भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकायेति यदतो होतान्वाह सूक्तऽइव तदाह यजमानायैवैतदाशिषमाशास्ते तद्वाऽएतदुपरिष्टाद्यज्ञस्याशिषमाशास्ते द्वयं तद्यस्मादुपरिष्टाद्यज्ञस्याशिषमाशास्ते ॥१॥ यज्ञं वाऽएष जनयति । यो यजतऽएतेन ह्युक्त्वा अविजस्तन्वते तं जनयत्यथाशिषमाशास्ते तामस्मै यज्ञ आशिषꣳ संनमयति यामाशिषमाशास्ते यो माजीजनतेति तस्माद्वाऽउपरिष्टाद्यज्ञस्याशिषमाशास्ते ॥२॥ देवान्वाऽएष प्रीणाति । यो यजतऽएतेन यज्ञेनऽर्ग्भिरिव यजुर्भिरिव वदाहुतिभिरिव वत्स देवान्प्रीत्वा तेष्वपिबी भवति तेष्वपिबी भूत्वाथाशिषमाशास्ते तामस्मै देवा आशिषꣳ संनमयन्ति यामाशिषमाशास्ते यो नाऽप्रैषीदिति तस्माद्वाऽउपरिष्टाद्यज्ञस्याशिषमाशास्ते ॥३॥ अथ प्रतिपद्यते । इदं द्यावापृथिवी भद्रमभूदिति भद्रꣳ ह्यभूद्यो यज्ञस्य सꣳस्थामगन्नार्ध्म सूक्तवाकमुत नमोवाकमित्युभयं वाऽएतद्यज्ञ एव यत्सूक्तवाकश्च नमोवाकश्चारात्स्म यज्ञमविदाम यज्ञमित्येवैतदाहाग्ने त्वꣳ सूक्तवागस्युपश्रुती दिवस्पृथिव्योरित्यग्निमेवैतदाह त्वꣳ सूक्तवागस्युपश्रृण्वत्योरनयोर्द्यावापृथिव्योरित्योमन्वती तेऽस्मिन्यज्ञे यजमान द्यावापृथिवी स्तामित्यवनवत्यौ तेऽस्मिन्यज्ञे यजमान द्यावापृथिवी स्तामित्येवैतदाह ॥४॥ शंगवी जीवदानूऽइति । शंगवी ते जीवदानू स्तामित्येवैतदाहात्रस्नूऽअप्रवेदेऽइति माह कस्माच्चन प्रत्रासीर्मा तऽइदं पुष्टं कश्चन प्रविदतेत्येवैतदाह ॥५॥ उरुगव्यूतीऽअभयंकृताविति । उरुगव्यूती तेऽभये स्तामित्येवैतदाह वृष्टिद्यावा रीत्यापेति वृष्टिमत्यौ ते स्तामित्येवैतदाह ॥६॥ शम्भुवौ मयोभुवाविति । शम्भुवौ ते मयोभुवौ स्तामित्येवैतदाहोर्जस्वती च पयस्वती चेति रसवत्यौ तऽउपजीवनीये स्तामित्येवैतदाह ॥७॥ सूपचरणा च स्वधिचरणा

चेति । सूपचरणाह ते॓ऽसावस्तु यामधस्तादुपचरसि स्वधिचरणो तऽइयमस्तु या-
मुपरिष्टादधिचरसीत्येवैतदाह तयोराविदीति तयोरनुमन्यमानयोरित्येवैतदाह ॥८॥
अग्निरिदᳬ हविः । अजुषतावीवृधत महो ज्यायोऽकृतेति तदाग्नेयमाज्यभागमाह
सोम इदᳬ हविरजुषतावीवृधत महो ज्यायोऽकृतेति तत्सौम्यमाज्यभागमाहाग्नि-
रिदᳬ हविरजुषतावीवृधत महो ज्यायोऽकृतेति तद्य एष उभयत्राच्युत आग्नेयः
पुरोडाशो भवति तमाह ॥९॥ अथ यथादेवतम् । देवा आज्यपा आज्यमजुषन्ता-
वीवृधन्त महो ज्यायोऽक्रतेति तत्प्रयाजानुयाजानाह प्रयाजानुयाजा वै देवा आ-
ज्यपा अग्निर्होत्रेणेदᳬ हविरजुषतावीवृधत महो ज्यायोऽकृतेति तदग्निᳬ होत्रे-
णाहाजुषतेत्येवं या इष्टा देवता भवन्ति ताः संपश्यत्यसौ हविरजुषतासौ हवि-
रजुषतेति तद्यजमानस्यैवैतत्समृद्धिमाशास्ते यद्धि देवा हविर्जुषन्ते तेन हि महज्जयति
तस्मादाहाजुषतेत्यवीवृधतेति यद्वै देवा हविर्जोषयन्ते तदपि गिरिमात्रं कुर्वते त-
स्मादाहावीवृधतेति ॥१०॥ महो ज्यायोऽक्रतेति । यज्ञो वै देवानां महस्तᳬ ज्यो-
तज्ज्यायाᳬसमिव कुर्वते तस्मादाह महो ज्यायोऽक्रतेति ॥११॥ अस्यामृधेद्धोत्रायां
देवंगमायामिति । अस्याᳬ राध्नोतु होत्रायां देवंगमायामित्येवैतदाहाशास्तेऽयं य-
जमानोऽसाविति नाम गृह्णाति तदेनं प्रत्यक्षमाशिषा संपादयति ॥१२॥ दीर्घायु-
त्वमाशास्तऽइति । सा यामुत्रोत्तरा देवयज्या तदिह प्रत्यक्षं दीर्घायुत्वᳬ ॥१३॥
सुप्रजास्त्वमाशास्तऽइति । तद्यदमुत्र भूयो हविष्करणं तदिह प्रत्यक्षᳬ सुप्रजास्त्वं
प्रशासनᳬ स कुर्यात्स एवं कुर्यादुत्तरां देवयज्यामाशास्तऽइति त्वेव ब्रूयात्तदेव जी-
वातुं तत्प्रजां तत्पशून् ॥१४॥ भूयो हविष्करणमाशास्तऽइति तद्वैव तत्सजात-
वनस्यामाशास्तऽइति प्राणा वै सजाताः प्राणैर्हि सह जायते तत्प्राणानाशास्ते
॥१५॥ दिव्यं धामाशास्तऽइति । देवलोके मेऽप्यसदिति वै यजते यो यजते तद्दे-
वलोकऽएवैनमेतदपिविनं करोति यद्वनेन हविषाशास्ते तदश्यात्तदृध्यादिति यद-

नेन हविषाशास्ते तदस्मै सर्वꣳ समृध्यतामित्येवैतदाह ॥१६॥ ता वाऽएताः । पञ्चाशिषः करोति तिस्र इडायां ता अष्टावष्टाक्षरा वै गायत्री वीर्यं गायत्री वीर्यमेवैतदाशिषोऽभिसंपादयति ॥१७॥ नातो भूयसीः कुर्यात् । अतिरिक्तꣳ ह कुर्याद्यदतो भूयसीः कुर्याद्यद्वै यज्ञस्यातिरिक्तं द्विषन्तꣳ हास्य तद्भ्रातृव्यमभ्यतिरिच्यते तस्मान्नातो भूयसीः कुर्यात् ॥१८॥ अपीद्धि कनीयसीः स्यात् । तदस्मै देवा रासन्तामिति तदस्मै देवा अनुमन्यन्तामित्येवैतदाह तदग्निर्देवो देवेभ्यो वनुतां वयमग्नेः परि मानुषा इति तदग्निर्देवो देवेभ्यो वनुतां वयमग्नेरध्यस्माऽएतद्वनन्तामहाऽइत्येवैतदाह ॥१९॥ इष्टं च वित्तं चेति । ऋषिषुरिव वाऽएतद्यज्ञं तमविदंस्तस्मादाहेष्टं च वित्तं चेत्युभे चैनं द्यावापृथिवीऽअꣳहसस्पातामित्युभे चैनं द्यावापृथिवीऽआर्तेर्गोपायतामित्येवैतदाह ॥२०॥ तदु हैकऽआहुः । उभे च मेति तथा होताशिष आत्मानं नान्तरेतीति तदु तथा न ब्रूयाद्यजमानस्य वै यज्ञऽआशीः किं नु तत्रऽर्त्विजां यां वै कां च यज्ञऽऋत्विज आशिषमाशासते यजमानस्यैव सा न ह स एतां क्व चनाशिषं प्रतिष्ठापयति य आहोभे च मेति तस्मादु ब्रूयादुभे चैनमित्येव ॥२१॥ इह गतिर्वामस्येति । तद्यदेव यज्ञस्य साधु तदेवास्मिन्नेतद्दधाति तस्मादाहेह गतिर्वामस्येति ॥२२॥ इदं च नमो देवेभ्य इति तद्यज्ञस्यैवैतत्सꣳस्थां गत्वा नमो देवेभ्यः करोति तस्मादाहेदं च नमो देवेभ्य इति ॥२३॥ अथ शम्योराह । शम्युर्ह वै बार्हस्पत्योऽञ्जसा यज्ञस्य सꣳस्थां विदां चकार स देवलोकमपीयाय तत्तदन्तर्हितमिव मनुष्येभ्य आस ॥२४॥ तद्धाऽऋषीणामनुश्रुतमास । शम्युर्ह वै बार्हस्पत्योऽञ्जसा यज्ञस्य सꣳस्थां विदां चकार स देवलोकमपीयायेति ते तामेव यज्ञस्य सꣳस्थामुपायन्याꣳ शम्युर्बार्हस्पत्योऽवेद्यच्छम्योरन्ववेक्ष्यत्येवैष एतद्यज्ञस्य सꣳस्थामुपैति याꣳ शम्युर्बार्हस्पत्योऽवेद्यच्छम्योराह तस्माद्वै शम्योराह ॥२५॥ स प्रतिपद्यते । तच्छम्योरावृणीमहऽइति तां यज्ञस्य सꣳस्थामावृ-

णीमहे याꣳ शम्युर्बार्हस्पत्योऽवेदित्येवैतदाह ॥२६॥ गातुं यज्ञाय गातुं यज्ञपतय ऽइति । गातुꣳ ह्येष यज्ञायेच्छति गातुं यज्ञपतये यो यज्ञस्य सꣳस्थां देवी स्वस्तिरस्तु नः स्वस्तिर्मानुषेभ्य इति स्वस्ति नो देवत्रास्तु स्वस्ति मनुष्यत्रेत्येवैतदाहोर्ध्वं जिगातु भेषजमित्यूर्ध्वं नोऽयं यज्ञो देवलोकं जयत्वित्येवैतदाह ॥२७॥ शं नोऽअस्तु द्विपदे शं चतुष्पदऽइति । एतावद्वाऽइदꣳ सर्वं यावद्द्विपाच्चैव चतुष्पाच्च तस्माऽएवैतद्यज्ञस्य सꣳस्थां गत्वा शं करोति तस्मादाह शं नोऽअस्तु द्विपदे शं चतुष्पदऽइति ॥२८॥ अथानयेत्युपस्पृशति । अमानुष-इव वाऽएतद्भवति यदार्विज्ये प्रवृत इयं वै पृथिवी प्रतिष्ठा तदस्यामेवैतत्प्रतिष्ठायां प्रतितिष्ठति तदु खलु पुनर्मानुषो भवति तस्मादनयेत्युपस्पृशति ॥२९॥ ब्राह्मणम् ॥२[१.१.]॥ ॥

ते वै पत्नीः संयाजयिष्यन्तः प्रतिपरायन्ति । जुहूं च स्रुवं चाध्वर्युरादत्ते वेदꣳ होताज्यविलापनीमग्नीत् ॥१॥ तद्धैकेषामध्वर्युः । पूर्वेणाहवनीयं पर्येति तदु तथा न कुर्याद्बहिर्धा ह यज्ञात्स्यात्तेनेयात् ॥२॥ जघनेनो हैव पत्नीम् । एकेषामध्वर्युरेति नोऽएव तथा कुर्यात्पूर्वार्धो वै यज्ञस्याध्वर्युर्जघनार्धः पत्नी यथा भसत्तः शिरः प्रतिदध्यादेवं तद्बहिर्धा हैव यज्ञात्स्यात्तेनेयात् ॥३॥ अन्तरेणो हैव पत्नीम् । एकेषामध्वर्युरेति नोऽएव तथा कुर्यादन्तरियाद्ध यज्ञात्पत्नीं यत्तेनेयात्तस्मादु पूर्वेणैव गार्हपत्यमन्तरेणाहवनीयं चेति तथा ह न बहिर्धा यज्ञाद्भवति यथाऽएवादः प्रचरन्नन्तरेणा संचरति स उऽएवास्यैष संचरो भवति ॥४॥ अथ पत्नीः संयाजयन्ति । यज्ञाद्वै प्रजाः प्रजायन्ते यज्ञात्प्रजायमाना मिथुनात्प्रजायन्ते मिथुनात्प्रजायमाना अन्ततो यज्ञस्य प्रजायन्ते तदेना एतदन्ततो यज्ञस्य मिथुनात्प्रजननात्प्रजनयति तस्मान्मिथुनात्प्रजननादन्ततो यज्ञस्येमाः प्रजाः प्रजायन्ते तस्मात्पत्नीः संयाजयन्ति ॥५॥ चतस्रो देवता यजति । चतस्रो वै मिथुनं द्वन्द्वं वै मिथुनं द्वे द्वे हि खलु भवतो मिथुनमेवैतत्प्रजननं क्रियते तस्माच्चतस्रो देवता यजति ॥६॥

ता वाऽआज्यहविषो भवन्ति । रेतो वाऽआज्यꣳ रेत एवैतत्सिञ्चति तस्मादाज्यहविषो भवन्ति ॥७॥ तेनोपाꣳशु चरन्ति । तिर-इव वै मिथुनेन चर्यते तिर-इवैतद्यदुपाꣳशु तस्मादुपाꣳशु चरन्ति ॥८॥ अथ सोमं यजति । रेतो वै सोमो रेत एवैतत्सिञ्चति तस्मात्सोमं यजति ॥९॥ अथ त्वष्टारं यजति । त्वष्टा वै सिक्तꣳ रेतो विकरोति तस्मात्त्वष्टारं यजति ॥१०॥ अथ देवानां पत्नीर्यजति । पत्नीषु वै योनौ रेतः प्रतिष्ठितं तत्ततः प्रजायते तत्पत्नीष्वेवैतद्योनौ रेतः सिक्तं प्रतिष्ठापयति तत्ततः प्रजायते तस्माद्देवानां पत्नीर्यजति ॥११॥ स यत्र देवानां पत्नीर्यजति । तत्पुरस्तात्तिरः करोत्युप ह वै तावद्देवता आसते यावन्न समिष्टयजुर्जुह्वतीदं नु नो जुह्वत्विति ताभ्य एवैतत्तिरः करोति तस्मादिमा मानुष्य स्त्रियस्तिर-इवैव पुꣳसो जिघत्सन्ति या-इव तु ता-इवेति ह स्माह याज्ञवल्क्यः ॥१२॥ अथाग्निं गृहपतिं यजति । अयं वाऽअग्निर्लोक इममेवैतल्लोकमिमाः प्रजा अभिप्रजनयति ता इमं लोकमिमाः प्रजा अभिप्रजायन्ते तस्मादग्निं गृहपतिं यजति ॥१३॥ तदिडान्तं भवति । न ह्यत्र परिधयो भवन्ति न प्रस्तरो यत्र वाऽअदः प्रस्तरेण यजमानꣳ स्वगाकरोति पतिं वाऽअनु जाया तदेवास्यापि पत्नी स्वगाकृता भवतीयसि तꣳ ह कुर्याद्यत्प्रस्तरस्य रूपं कुर्यात्तस्मादिडान्तमेव स्यादुतो प्रस्तरस्यैव रूपं क्रियते ॥१४॥ स यदि प्रस्तरस्य रूपं कुर्यात् । यथैवादः प्रस्तरेण यजमानꣳ स्वगाकरोत्येवमेवैतत्पत्नीꣳ स्वगाकरोति ॥१५॥ स यदि प्रस्तरस्य रूपं कुर्यात् । वेदस्यैकं तृणमाच्छिद्याग्रं जुह्वामनक्ति मध्यꣳ स्रुवे बुध्नꣳ स्थाल्याम् ॥१६॥ अथाग्नीदाहानुप्रहरेति । तूष्णीमेवानुप्रहृत्य चक्षुष्पा अग्नेऽसि चक्षुर्मे पाहीत्यात्मानमुपस्पृशति तेनोऽअस्यात्मानं नानुप्रवृणक्ति ॥१७॥ अथाह संवदस्वेति । अगानग्नीदगञ्छ्रावय श्रौषट् स्वगा दैव्या होतृभ्यः स्वस्तिर्मानुषेभ्यः शंयोर्ब्रूहीति ॥१८॥ अथ जुहूं च स्रुवं च संप्रगृह्णाति । अदो हैवाहुतिं करोति यदनयाहुतिर्भूत्वा देवलोकं गच्छा-

दिति तस्माज्जुहूं च स्रुवं च संप्रगृह्णाति ॥१९॥ स वाऽअग्नये संप्रगृह्णाति । अग्ने ऽदब्धायोऽशीततमेत्यमृतो ह्यग्निस्तस्मादाहादब्धायवित्यशीततमेत्यशिष्टो ह्यग्निस्तस्मादाहाशीततमेति पाहि मा दिद्योः पाहि प्रसित्यै पाहि दुरिष्ट्यै पाहि दुरद्मन्याऽइति सर्वाभ्यो मार्त्तिभ्यो गोपायेत्येवैतदाहाविषं नः पितुं कृणुवित्यन्नं वै पितुरनमीवं न इदमकिल्विषमन्नं कुर्वित्येवैतदाह सुषदा योनावित्यात्मन्येतदाह स्वाहा वाडिति तद्यथा वषट्कृतꣳ हुतमेवमस्यैतद्भवति ॥२०॥ अथ वेदं पत्नी विस्रꣳसयति । योषा वै वेदिर्वृषा वेदो मिथुनाय वै वेदः क्रियतेऽथ यदेनेन यज्ञऽउपालभते मिथुनमेवैतत्प्रजननं क्रियते ॥२१॥ अथ यत्पत्नी विस्रꣳसयति । योषा वै पत्नी वृषा वेदो मिथुनमेवैतत्प्रजननं क्रियते तस्मादिदं पत्नी विस्रꣳसयति ॥२२॥ सा विस्रꣳसयति । वेदोऽसि येन त्वं देव वेद देवेभ्यो वेदोऽभवस्तेन मह्यं वेदो भूया इति यदि यजुषा चिकीर्षेदेतेनैव कुर्यात् ॥२३॥ तमा वेदेः सꣳस्तृणाति । योषा वै वेदिर्वृषा वेदः पश्चाद्धि परीत्य वृषा योषामधिद्रवति पश्चादेवैनामेतत्परीत्य वृष्णा वेदेनाधिद्रावयति तस्मादा वेदेः सꣳस्तृणाति ॥२४॥ अथ समिष्टयजुर्जुहोति । प्राञ्चो यज्ञोऽनुसंतिष्ठाताऽइत्यथ यद्धुत्वा समिष्टयजुः पत्नीः संयाजयेत्प्रत्यङ्हु हैवास्यैष यज्ञः संतिष्ठेत तस्माद्वाऽएतर्हि समिष्टयजुर्जुहोति प्राञ्चो यज्ञोऽनुसंतिष्ठाताऽइति ॥२५॥ अथ यस्मात्समिष्टयजुर्नाम । या वाऽएतेन यज्ञेन देवता ह्वयति याभ्य एष यज्ञस्तायते सर्वा वै तत्ताः समिष्टा भवन्ति तद्यत्तासु सर्वासु समिष्टास्वथैतज्जुहोति तस्मात्समिष्टयजुर्नाम ॥२६॥ अथ यस्मात्समिष्टयजुर्जुहोति । या वाऽएतेन यज्ञेन देवता ह्वयति याभ्य एष यज्ञस्तायतऽउप ह वै ता आसते यावन्न समिष्टयजुर्जुह्वतीदं नु नो जुह्वतिति ता एवैतद्यथायथं व्यवसृजति यत्र-यत्रासां चरणं तदनु यज्ञं वाऽएतदजीजनत यदेममतत तं जनयित्वा यत्रास्य प्रतिष्ठा तत्प्रतिष्ठापयति तस्मात्समिष्टयजुर्जुहोति ॥२७॥ स जुहोति । देवा

गातुविद इति गातुविदो हि देवा गातुं वित्त्वेति यज्ञं वित्त्वेत्येवैतदाह गातुमिते-
ति तदेतेन यथायथं व्यवसृजति मनसस्पतऽइमं देव यज्ञꣳ स्वाहा वाते धाऽइत्य-
यं वै यज्ञो योऽयं पवते तदिमं यज्ञꣳ सम्भृत्यैतस्मिन्यज्ञे प्रतिष्ठापयति यज्ञेन यज्ञꣳ
संदधाति तस्मादाह स्वाहा वाते धा इति ॥२८॥ अथ बर्हिर्जुहोति । अयं वै
लोको बर्हिरोषधयो बर्हिरस्मिन्नेवैतल्लोकऽओषधीर्दधाति ता इमा अस्मिंल्लोक
ऽओषधयः प्रतिष्ठितास्तस्माद्बर्हिर्जुहोति ॥२९॥ तां वाऽअतिरिक्तां जुहोति । स-
मिष्टयजुर्ह्येवान्तो यज्ञस्य यदूर्ध्वꣳ समिष्टयजुषोऽतिरिक्तं तद्यदा हि समिष्टयजुर्जु-
होत्यथैताभ्यो जुहोति तस्मादिमा अतिरिक्ता असंमिता ओषधयः प्रजायन्ते ॥३०॥
स जुहोति । सं बर्हिरङ्क्ताꣳ हविषा घृतेन समादित्यैर्वसुभिः सं मरुद्भिः समिन्द्रो
विश्वदेवेभिरङ्क्तां दिव्यं नभो गच्छतु यत्स्वाहेति ॥३१॥ अथ प्रणीता दक्षिणतः प-
रीत्य निनयति । युङ्क्ते वाऽएतद्यज्ञं यदेनं तनुते स यन्न निनयेत्पराङु हाविमुक्त
एव यज्ञो यजमानं प्रक्षिणीयात्तथो ह यज्ञो यजमानं न प्रक्षिणाति तस्मात्प्रणी-
ता दक्षिणतः परीत्य निनयति ॥३२॥ स निनयति । कस्त्वा विमुञ्चति स त्वा
विमुञ्चति कस्मै त्वा विमुञ्चति तस्मै त्वा विमुञ्चति पोषायेति तत्पुष्टिमुत्तमां यज-
मानाय निराह स येनैव प्रणयति तेन निनयति येन ह्येव योग्यं युञ्जन्ति तेन
विमुञ्चन्ति योक्त्रेण हि योग्यं युञ्जन्ति योक्त्रेण विमुञ्चन्त्यथ फलीकरणान्कपालेना-
धोऽधः कृष्णाजिनमुपास्यति रक्षसां भागोऽसीति ॥३३॥ देवाश्च वाऽअसुराश्च ।
उभये प्राजापत्याः पस्पृधिरऽएतस्मिन्यज्ञे प्रजापतौ पितरि संवत्सरेऽस्माकमयं भ-
विष्यत्यस्माकमयं भविष्यतीति ॥३४॥ ततो देवाः । सर्वं यज्ञꣳ संवृज्याथ यत्पा-
पिष्ठं यज्ञस्य भागधेयमासीत्तेनैनान्निरभजन्नस्ना पशोः फलीकरणैर्हविर्यज्ञात्सुनिर्भ-
क्ता असन्नित्यथ वै सुनिर्भक्तो यं भागिनं निर्भजन्त्यथ यमभागं निर्भजन्त्येव स ता-
वद्ध्यतऽउत हि वशे लब्धाह किं मा बभक्थेति स यमेवेभ्यो देवा भागमक-

त्ययंस्तमेवैभ्य एष एतद्भागं करोत्यथ यद्धोऽधः कृष्णाजिनमुपास्यत्यनग्नावेवैभ्य एतदन्धे तमसि प्रवेशयति तथोऽएवासृक्पशो रक्षसां भागोऽसीत्यनग्नावन्धे तमसि प्रवेशयति तस्मात्पशोस्तेदनीं न कुर्वन्ति रक्षसाᳬ हि स भागः ॥ ३५ ॥ ब्राह्मणम् ॥ ३ [९. २.] ॥ ॥

सᳬस्थिते यज्ञे । दक्षिणतः परीत्य पूर्णपात्रं निनयति तथा क्षुदग्भवति तस्माद्दक्षिणतः परीत्य पूर्णपात्रं निनयति देवलोके मेऽप्यसदिति वै यजते यो यजते सोऽस्यैष यज्ञो देवलोकमेवाभिप्रैति तदनूची दक्षिणा यां ददाति सैति दक्षिणामन्वारभ्य यजमानः ॥ १ ॥ स एष देवयानो वा पितृयाणो वा पन्थाः । तदुभयतोऽग्निशिखे समोषन्त्यौ तिष्ठतः प्रति तमोषतो यः प्रत्युष्योऽत्यु तᳬ सृजेते यो ऽतिसृज्यः शान्तिरापस्तदेतमेवैतत्पन्थानᳬ शमयति ॥ २ ॥ पूर्णं निनयति । सर्वं वै पूर्णᳬ सर्वेणैवैनमेतच्छमयति संततमव्यवच्छिन्नं निनयति संततेनैवैनमेतदव्यवच्छिन्नेन शमयति ॥ ३ ॥ यद्वेव पूर्णपात्रं निनयति । यद्वै यज्ञस्य मिथ्या क्रियते व्यस्य तद्वृहन्ति क्षण्वन्ति शान्तिरापस्तदद्भिः शान्त्या शमयति तदद्भिः संदधाति ॥ ४ ॥ पूर्णं निनयति । सर्वं वै पूर्णᳬ सर्वेणैवैतत्संदधाति संततमव्यवच्छिन्नं निनयति संततेनैवैतदव्यवच्छिन्नेन संदधाति ॥ ५ ॥ तदञ्जलिना प्रतिगृह्णाति । सं वर्चसा पयसा सं तनूभिरगन्महि मनसा सᳬ शिवेन त्वष्टा सुदत्रो विदधातु रायोऽनुमार्ष्टु तन्वो यद्विलिष्टमिति यद्विवृढं तत्संदधाति ॥ ६ ॥ अथ मुखमुपस्पृशते । द्वयं तद्यस्मान्मुखमुपस्पृशतेऽमृतं वाऽआपोऽमृतेनैवैतत्संस्पृशतऽएतद्ध चैवैतत्कर्मात्मन्कुरुते तस्मान्मुखमुपस्पृशते ॥ ७ ॥ अथ विष्णुक्रमान्क्रमते । देवान्वाऽएष प्रीणाति यो यजतऽएतेन यज्ञेनऽर्ग्भिरिव यजुर्भिरिव त्वदाहुतिभिरिव त्वत्स देवान्प्रीत्वा तेष्वपित्वी भवति तेष्वपित्वी भूत्वा तानेवाभिप्रक्रामति ॥ ८ ॥ यद्वेव विष्णुक्रमान्क्रमते । यज्ञो वै विष्णुः स देवेभ्य इमां विक्रान्तिं विचक्रमे यैषामियं विक्रान्तिरिदमेव प्र-

थमेन पदेन पस्पारायेदमन्तरिक्षं द्वितीयेन दिवमुत्तमेनैताम्वेवैष एतस्मै विष्णुर्यज्ञो
विक्रान्तिं विक्रमते तस्माद्विष्णुक्रमान्क्रमते तद्वाऽइत एव पराचीनं भूयिष्ठा इव
क्रमन्ते ॥९॥ तद्वै तत्पृथिव्यां विष्णुर्व्यक्रꣳस्त । गायत्रेण छन्दसा ततो निर्भक्तो
योऽस्मान्द्वेष्टि यं च वयं द्विष्मोऽन्तरिक्षे विष्णुर्व्यक्रꣳस्त त्रैष्टुभेन छन्दसा ततो नि-
र्भक्तो योऽस्मान्द्वेष्टि यं च वयं द्विष्मो दिवि विष्णुर्व्यक्रꣳस्त जागतेन छन्दसा ततो
निर्भक्तो योऽस्मान्द्वेष्टि यं च वयं द्विष्म इत्येवमिमांल्लोकान्त्समारुह्याथैषा गतिरे-
षा प्रतिष्ठा य एष तपति तस्य ये रश्मयस्ते सुकृतोऽथ यत्परं भाः प्रजापतिर्वा
स स्वर्गो वा लोकस्तदेवमिमांल्लोकान्त्समारुह्याथैतां गतिमेतां प्रतिष्ठां गच्छति प-
रस्तादेवार्वाङ् क्रमेत य इतोऽनुशासनं चिकीर्षेद्द्वयं त्वस्मात्परस्तादर्वाङ् क्रमते
॥१०॥ अपसरणतो ह वाऽअग्रे देवा जयन्तोऽजयन् । दिवमेवाग्रेऽथेदमन्तरिक्षम-
थेतोऽनपसरणात्सपत्नाननुदन्त तथोऽएवैष एतदपसरणत एवाग्रे जयञ्जयति दि-
वमेवाग्रेऽथेदमन्तरिक्षमथेतोऽनपसरणात्सपत्नान्नुदतऽइयं वै पृथिवी प्रतिष्ठा तद-
स्यामेवैतत्प्रतिष्ठायां प्रतितिष्ठति ॥११॥ तद्वै तद्दिवि विष्णुर्व्यक्रꣳस्त । जागतेन
छन्दसा ततो निर्भक्तो योऽस्मान्द्वेष्टि यं च वयं द्विष्मोऽन्तरिक्षे विष्णुर्व्यक्रꣳस्त त्रै-
ष्टुभेन छन्दसा ततो निर्भक्तो योऽस्मान्द्वेष्टि यं च वयं द्विष्मः पृथिव्यां विष्णुर्व्यक्रꣳ-
स्त गायत्रेण छन्दसा ततो निर्भक्तो योऽस्मान्द्वेष्टि यं च वयं द्विष्मोऽस्मादन्नादस्यै
प्रतिष्ठायाऽइत्यस्याꣳ हीदꣳ सर्वमन्नाद्यं प्रतिष्ठितं तस्मादाहास्मादन्नादस्यै प्रतिष्ठा-
याऽइति ॥१२॥ अथ प्राङ् प्रेक्षते । प्राची हि देवानां दिक्तस्मात्प्राङ् प्रेक्षते ॥१३॥
स प्रेक्षते । अगन्म स्वरिति देवा वै स्वरगन्म देवानित्येवैतदाह सं ज्योतिषा-
भूमेति सं देवैरभूमेत्येवैतदाह ॥१४॥ अथ सूर्यमुदीक्षते । सैषा गतिरेषा प्रतिष्ठा
तदेतां गतिमेतां प्रतिष्ठां गच्छति तस्मात्सूर्यमुदीक्षते ॥१५॥ स उदीक्षते । स्वयम्-
भूरसि श्रेष्ठो रश्मिरित्येष वै श्रेष्ठो रश्मिर्यत्सूर्यस्तस्मादाह स्वयम्भूरसि श्रेष्ठो र-

स्मिरिति वर्चोदा असि वर्चो मे देहीति तेवाह ब्रवीमीति ह स्माह याज्ञवल्क्यस्तद्येव ब्राह्मणेनेष्टव्यं यद्ब्रह्मवर्चसी स्यादित्युतो ह स्माहौपोदितेय एष वाव मह्यं गा दास्यति गोदा गा मे देहीत्येवं यं कामं कामयते सोऽस्मै कामः समृध्यते ॥१६॥ अथावर्तते । सूर्यस्यावृतमन्वावर्तऽइति तदेतां गतिमेतां प्रतिष्ठां गत्वैतस्यैवावृतमन्वावर्तते ॥१७॥ अथ गार्हपत्यमुपतिष्ठते । द्वयं तद्यस्माद्गार्हपत्यमुपतिष्ठते गृहा वै गार्हपत्यो गृहा वै प्रतिष्ठा तद्गृहेष्वेवैतत्प्रतिष्ठायां प्रतितिष्ठति यावद्वेवास्येह मानुषमायुस्तस्माऽएवैतदुपतिष्ठते तस्माद्गार्हपत्यमुपतिष्ठते ॥१८॥ स उपतिष्ठते । अग्ने गृहपते सुगृहपतिस्त्वयाग्नेऽहं गृहपतिना भूयासꣳ सुगृहपतिस्त्वं मयाग्ने गृहपतिना भूया इति नात्र तिरोहितमिवास्त्यस्थूरि णौ गार्हपत्यानि सन्त्वित्यनार्त्तानि नौ गार्हपत्यानि सन्त्वित्येवैतदाह शतꣳ हिमा इति शतं वर्षाणि जीव्यासमित्येवैतदाह तदप्येतद्भुवन्नाद्रियेतापि हि भूयाꣳसि शताद्वर्षेभ्यः पुरुषो जीवति तस्मादप्येतद्भुवन्नाद्रियेत ॥१९॥ अथावर्तते । सूर्यस्यावृतमन्वावर्तऽइति तदेतां गतिमेतां प्रतिष्ठां गत्वैतस्यैवावृतमन्वावर्तते ॥२०॥ अथ पुत्रस्य नाम गृह्णाति । इदं मेऽयं वीर्यं पुत्रोऽनुसंतनवदिति यदि पुत्रो न स्यादप्यात्मन एव नाम गृह्णीयात् ॥२१॥ अथाहवनीयमुपतिष्ठते । प्राञ्चे यज्ञोऽनुसंतिष्ठाताऽइति तूष्णीमुपतिष्ठते ॥२२॥ अथ व्रतं विसृजते । इदमहं य एवास्मि सोऽस्मीत्यमानुष-इव वाऽएतद्भवति यद्व्रतमुपैति न हि तदवकल्पते यद्ब्रूयादिदमहꣳ सत्यादनृतमुपैमीति तद्उ खलु पुनर्मानुषो भवति तस्मादिदमहं य एवास्मि सोऽस्मीत्येवं व्रतं विसृजेत ॥२३॥ ॥ ब्राह्मणम् ॥४[१. ३.]॥ ॥ सप्तमः प्रपाठकः ॥ कण्डिकासंख्या ११४ ॥ ॥ नवमोऽध्यायः ॥ ॥ अस्मिन्काण्डे कण्डिकासंख्या ८३७ ॥ ॥

इति माध्यन्दिनीये शतपथब्राह्मणे ग्रीहविर्यज्ञनाम प्रथमं काण्डं समाप्तम् ॥ ॥

## EXTRACTS MADE FROM THE COMMENTARIES OF SÂYAṆÂCÂRYA AND HARISVÂMIN.

अग्न्याधानेऽग्नयः पवमानेष्टिभिर्निष्पाद्याः पवमानेष्टयश्च दर्शपूर्णमासविकृतितया तदधिगमसापेक्षज्ञाना इति प्रथमे काण्डे दर्शपूर्णमासौ प्रतिपाद्येते । तदनुष्ठानारम्भश्च पूर्णमासपूर्वकः अतश्च तस्य पूर्णमासस्य प्रथमं यदङ्गं व्रतोपायनं तदङ्गत्वेनापामुपस्पर्शनं विधत्ते व्रतमुपैष्यन्निति । अग्निप्रणयनं तत्प्रबलीकरणान्नूपमन्वाधानं चार्थसिद्धत्वादनुक्तमित्युच्यमानाङ्गमध्ये व्रतोपायनस्य प्राथम्यमविरुद्धम् ॥१॥ इदानीमग्निदर्शनलक्षणेनाङ्गान्तरेण सहितं समन्त्रकं व्रतोपायनं विधत्ते स इति । स यजमानः अग्निमाहवनीयम् व्रतमनृतवदनत्यागादिरूपम् राध्यतां समृद्धं भवतु तिरोहितमविस्पष्टार्थं पदम् ॥२॥ स्वीकृतस्य व्रतस्य यागसमाप्तिपर्यन्ततामाहाथेति । संस्थिते यागे पर्यवसिते ॥ अत्र व्रतोपायने मन्त्रान्तरं विधातुं पूर्वमन्त्रस्यैव विशेषमाह यत एतेन वक्ष्यमाणेनेदमहमित्यादिना बहवो व्रतमुपयन्त्यतस्तु हेतोरनेनैवोपेयात् एवकारेणैष मन्त्रः प्रशस्यते न तु पूर्वो निषिध्यते अत एव कात्यायनो [२.१.११.] द्वयमप्याशाग्ने व्रतपतेऽइदमहमिति वेति ॥३॥ यदिदं जगत्सर्वमनृतं सत्यं वेति कोटिद्वयमेवात्र न तृतीया कोटिरस्ति ॥४॥ अनेन मन्त्रेण व्रतमुपेयुषो नियममाह स इति । स इत्थं कृतव्रतोपायनः सत्यमेवेत्येवकारकरणादनृतं न वदेदित्यर्थः । असत्येवकारे यद्यत्सत्यं तत्तदवश्यं वक्तव्यं स्यात् अनृतवदनं चाप्रतिषिद्धं स्यात् इष्यते च तन्निषेधः ॥५॥ प्रसङ्गाद्विसर्जनमाह see १.३.२३. । व्रतोपायनात्प्रागय अहमेव मनुष्योऽस्मि व्रतमुक्त्वा स एव मनुष्यः इदमस्मिन्ननुव्रतसमये इदमिति क्रियाविशेषणत्वान्नपुंसकत्वम् नन्वसौ मनुष्यो व्रतसमयेऽपि मनुष्य एव तत्किमुच्यते य एव मनुष्योऽस्मि स एवेदमस्मीति । तत्राहामानुष इवेति मनुष्योऽपि हि तदा [स]त्यात्मकत्वात्सत्यवदनाद्वा देव इत्युक्तम् व्रतत्यागे कृते व्रतारम्भात्प्रागिव स्वभावसिद्धं मनुष्यत्वमेवेति ॥ ननु यथा व्रतोपायने अनृतात्सत्यमुपैमीत्युक्तम् एवं तत्त्यागे सत्यादनृतमुपैमीति किं नोक्तमित्यत आह न हीति । महत उत्कृष्टाद्देवत्वात्प्रच्युतेनात्यन्तनिकृष्टमानुषत्वप्राप्तिकथनस्यानवकल्पनम् ॥६॥ व्रतप्रसङ्गादागतं तद्विसर्जनं समाप्य पूर्वेद्युर्यजमानेन व्रतानन्तरं यत्कर्तव्यं तद्वक्तव्यं प्रतिजानीते अथेति । यतो व्रतानन्तरमशनानशनापरनामकमारण्याशनमेव यजमानेन कर्तव्यम् अतस्तदनन्तरमेव तस्य निरूपणं क्रियतऽइत्यर्थः ॥ प्रतिज्ञातस्याशनानशनपक्षस्य प्रशंसार्थं केवलानशनपक्षं निरसितुमुपन्यस्यति तदु हेति । तत्रास्मिन्नशनानशनविषये अनशनं सर्वात्मना अशनत्यागम् ॥ उपवसथनामनिर्वचनेन देवानामागमनं दर्शयति तेऽस्येति उप समीपे यजमानस्य वसन्ति देवा अस्मिन्निति पर्वदिवस उपवसथनामक इत्यर्थः ॥७॥ गृहे मनुष्येष्वागतेष्वनश्नत्सु यः कश्चिद्यजमानः स्वयं पूर्वं भुञ्जीतेति यत्तदेवानुचितं तर्कयामः अथ यः कश्चिद्देवेष्वनश्नत्सु पूर्वोऽश्नीयादिति यत्तस्यानवक्लृप्तिः किमु वक्तव्या आषाढेन चेन्मुनिना निर्णीतोऽनशनपक्षः तर्हि स एव परमार्थः ॥८॥ कथमशनानशनपक्ष इति चेत् अस्यापि मुनिनैव याज्ञवल्क्येन सोपपत्तिना नीतत्वादित्याह तदिति । अशनानशनलक्षणस्वमतसमर्थनाय प्रत्येकपक्षौ दूषयति

यदिति । दैविके हि कर्मणि देवान्प्रत्युद्दिष्टस्यैव हविषः प्रथममनुपयोगः काममन्यस्य पि-त्र्ये पुनरतिनियमाद्यविषेोऽन्यदपि अनुपयोऽयमिति पितृदेवत्यतामापादयति याज्ञवल्क्यस्या-शयः । तत्किं दैविके कर्मणि प्रागपि भोक्तव्यमिति यस्तमाशयमजानानः शङ्कते तमाह यद्यु इति यदि तु अश्नाति तदा अशिशिषतो देवानतिक्रम्य स्वयं भुक्तवान् स्यात् ॥ अशनानशन-पक्षयोरुभयोरपि दोषश्चेत्का गतिरिति यद्‌द्रव्यमशितमप्यनशितवद्भवति तदश्नीयात् । यस्य द्रव्यस्य संबन्ध्यन्नं हविश्चैन देवा न गृह्णन्ति तदशितमपि सदनशितवद्भवति । तथाच य-थोदीरितदोषद्वयाभावमाह स यदिति ॥९॥ आरण्यग्रहणं प्राकृतदर्शपूर्णमासहविर्व्यतिरिक्तोप-लक्षणम् वृष्ट्यं वृक्षोद्भवं फलम् । वृषा नाम कश्चिदस्य पुत्रो वाष्कलिस्तस्य मुनेर्मतमपवदति तद् तथेति । शमीधान्यं तिलमाषादि । उपचितान्नीत्युपचम् अल्पेनापि माषादिना मिश्रितं व्रीहिपिष्टं तृचतुरान्माषान्श्रयितं (°माष्ठ्रपि A.C.!) उपचितं बहु भवति इति प्रसिद्धं तदाह व्री-हियवाविति अतो माषोपयोगे व्रीहियवावेव यत उपयुक्तौ स्याताम् अतस्तथा न कुर्यात् अ-तो युक्तमारण्यमेवाश्नीयादिति ॥१०॥ स प्रसिद्धोऽध्वर्युः अप एवाभिमुख्येन प्राप्नोति । एतच्चा-पां प्रणयनमथ संयौतीति [२.२.१.] वक्ष्यमाणसंयवनार्थम् अतः संयवनात्प्राक्प्रणीतानां ना-शे पुनः प्रणयनं कार्यम् कृते तु संयवने तन्नाशेऽपि प्रयोजनस्य जातत्वान्न पुनः प्रणेतव्यम् ॥ उक्तं प्रणयनं प्रशंसति यज्ञो वाऽइति । अपां यज्ञसाधनतया यज्ञरूपत्वात्तद्विस्तारात्मकस्य प्र-णयनस्य यज्ञविस्ताररूपत्वात्प्राशस्त्यम् ॥१२॥ व्याह्रियन्तऽइति व्याहृतायां मन्त्राः दुर्ज्ञानवाभि-धानाश्च [°वानि° A.B.] अनिश्चित्य वचनादनिरुक्ताः ॥१३॥ अनियोग एवकारः । व्याप्नुवन्ति सकलं जगदित्यापः ॥१४॥ अथवान्य कर्मणि यदेवाङ्गं प्रापयितव्यमध्वर्य्वादयः प्रमादान्न प्राप-यन्ति तद्वैकल्यमुदकाचमनप्रोक्षणादिना परिहृत्य आपयन्ति ॥१५॥ अपां वज्ररूपता आपो वज्रो भूत्वेत्यादिप्रसिद्धं श्रुत्यन्तरं वज्रो वाऽइति । न केवलं प्रसिद्धिबलादस्त्रयम् उपपत्तिबलाच्चेत्याह वज्रो हीति । उपपत्तेः प्रसिद्धिं वैशब्द आह । तां प्रसिद्धामुपपत्तिं दर्शयति तस्मादिति । यस्मादापो वज्रः तस्मादेन पथा गच्छन्ति तं पन्थानं निम्नं गर्तं कुर्वन्ति यद्वा यत्र तृणं गुल्मं वा उपतिष्ठते निर्दहन्ति निःसारं कुर्वन्ति ॥ देवा एतमुदकलक्षणं वज्रमुद्यच्छन्तुत्कृष्ट-कारप्रणयनात्मकमुद्यमनं तस्य कृतवन्त इत्यर्थः तस्य वज्रस्य सम्बन्धिन्यभयं [तेन वज्रेण परिरक्षितमभयं अनाष्ट्रं नाशयतीति नाष्ट्राण्यनुररक्षमानि तद्रहिते निवाते तत्संस्पृष्टेन वातेना-पि रहिते स्थाने यथा देवाः कृतवन्तः तथैवैषामध्वर्युः ॥१७॥ प्रणयनप्रकारमाह ता इति । चमसादिपात्रस्योपरि सिक्ता पूरयित्वा न पुनः कृतश्चित्स्थलाशयादुद्धृत्य गार्हपत्यस्योत्तरभागे स्था-पयेत् आपस्तम्बस्तु स्थापितपात्रस्य समन्त्रकं पूरणमाह इह तु ब्राह्मणे पूरितस्य स्थापनम् ॥ उदपात्रस्थापनं प्रयोजनान्तरेण स्तौति वज्रं वाऽइति । संमृणाति हिनस्ति । अतो हिंसापरि-हाराय स्वयं संनद्ध एवोच्छ्रयेत ॥१८॥ उद्यन्तुः प्रतिष्ठामुक्त्वा उद्यन्तव्यस्यापि प्रतिष्ठामाह स इति ॥१९॥ सादितानामपां प्रणयनमाह ता इति । आहवनीयस्य संनिहितोत्तरभागे प्रणयति नो-त्वासादयति ॥२०॥ अन्तरेणेति बलादयिमिति लभ्यते । संचान् संचरयुः लिङ्ङर्थे लेट् ॥ सा-त्वाउत्तरभागे आहवनीयप्रणयनं विवक्षितमिति दर्शयितुं ततः प्राक्प्रत्यगासादनं निषेधति अतिप्रहृत्य उत्तरभागमतीत्य प्राग्भागं अनाप्त्वा उत्तरभागमप्राप्ताः प्रत्यगेव नासादयेत् । तत्र दोषं वक्तुमुपोद्घातमाह । व्यन् सपत्नऽइति [पा° ४.१.१४५] स्मृतेर्भ्रातृव्यः तस्य भावो भ्रा-

तृव्यं शात्रवम् युवादिवाद्यात्रे [पा° ५.१.१३०] अण् विशिष्टं भ्रातृव्यम् महद्वैरम् तदद्भिः सह अग्नेर्यथा भवति तथा सोऽप्तिजन्मध्वर्युः कुर्यादित्यर्थः । यत्र कर्मण्यस्य प्रणयनपात्रस्य सम्बन्धिनीरप उपस्पृशन्नृत्विग्यजमानाः तत्रोपस्पर्शनमन्त्रो भ्रातृव्यं शत्रुमुदकलक्षणं वर्धयेदुक्तेन । अतिहरणस्य वैरकारणसंबन्धार्थः प्रथमोऽनुवादः चरमस्तु भ्रातृव्यवर्धनसमर्थनार्थ इत्यपानरुक्त्यम् ॥ संप्रति गमयन् ॥२१॥ प्रणीताप्रणयनानन्तरं परिस्तरणं पात्रासादनं चाहाथेति ॥ विराडशब्दस्य मोऽन्तेषु दशसंख्यास्ति । प्रथमश्च यज्ञो ज्योतिष्टोमः एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोम इति श्रुतेः तत्र च नवत्युत्तरशतसंख्याकाः स्तोत्रियाः तास्त्वेकोनविंशतिसंख्यया विभज्यमानासु दश लभ्यन्तऽइत्यस्ति तत्रापि दशसंख्या अतो दशसंख्यायोगाद्विराड्यज्ञयोरेकत्वादिह दशसंख्यासंपत्त्या विराडात्मको यज्ञ इह साकल्येन संपादितो भवति ॥ रभ राभस्ये राभस्यं कार्योपक्रमः किमपि कार्यं कर्तुमुपक्रमेते ॥२२॥ १ ॥१॥

आदानं हविर्निर्वापार्थम् यज्ञाय हि तदादानम् इज्यतेऽनेनेति यज्ञो हविः तदिह निर्वापकाले व्रीहिरूपम् तदग्निहोत्रहवण्या शूर्पं निर्वपन्त्रिवेष्टीत्र परिवेषणं करोतीव विष्ट व्याप्तौ निज़ां त्रयाणां गुणः श्लाविति [पा° ७.४.७५.] अभ्यासस्य गुणः ॥१॥ वाङ्नियमे हि चित्तविक्षिप्तेनौर्वाग्व्यवहारस्याभावात्तदैकाग्र्ये सति अविकलो यज्ञो यतः संपद्यते । क्षुभेल्दान्तापदेशंक्ष्यागमानुशासनस्यानित्यत्वादिडभावः क्षुब्धस्वान्तेति [पा° ७.२.१८.] ज्ञापकात्क्षुब्ध इति निपातितम् ॥ शूर्पं चाग्निहोत्रहवणीं च प्रतपति ॥२॥ नाशयतीति नाष्ट्रा आसुर्यः प्रजाः । तत्तेन तपनेन यज्ञमुखात्यज्ञारम्भात् एतदिति क्रियाविशेषणम् ॥३॥ शूर्पप्रतपनानन्तरमुर्वितित मन्त्रेण हविर्निर्वापार्थं शकटसमीपं प्रगच्छन् ॥ यथा वृक्षो मूलैः पृथिवीमनुप्रविष्टस्तिष्ठत्येव न गच्छति यथा व्याघ्रादिरभितः पाशाभ्यां ध्रुवा क्रियमाणः नैवं पुरुषो मूलवान्नाप्युभयतः केनचित्संसर्गिणा प्रतिबद्धः किं तु परिछिन्नः प्रतिबन्धकासंसृष्टः सन्नन्तरिक्षे विश्रम्भं चरति तथैव निर्वपस्यमानहविरादानार्थं गन्तोऽप्युक्तविशेषणविशिष्टं सर्वं निर्वपस्यन्तं पुरुषमनुगच्छेत अतस्तदेतत्पुरुषेण गम्यमानमन्तरिक्षं अस्माभा उर्वित्येनेनैव मन्त्रेणानाष्ट्रं हिंसाकारहितमत एवाभयं करोति । उरु विस्तीर्णं प्रतिबन्धकालोलक्षणमूर्तद्रव्यविरहादिति हि मन्त्रार्थः ॥४॥ अनस एव न शालायाः सकाशाद्ग्रहणे कारणमाह स इति । अन एव हि प्रथमं धान्यस्याधिकरणम् अनसः सकाशान्नीयमानं धान्यं पश्चादेव किं ततः पश्चात् (यत्काल!) एतत (B. यतते A. C.!!) शालागतं भवति शालाशब्दाच्छान्दसत्वेन छस्य विकल्पितत्वाद्वा ॥ यदग्रे गृहप्रवेशात्प्रागनसि स्थितमत एव गृहिणामाशय अनुपहतं तदेव यज्ञसाधनं करवाणीति ॥५॥ बहोर्भावो भूमा । अनोवाह्यमनसा वोढुमर्हम् ॥६॥ वैशब्दस्तस्य विधिश्रुतिमिदं यज्ञसाधनत्वं स्तोतुं स्मारयति । न केवलं श्रुतिसिद्धं तस्य तत्साधनत्वम् प्रत्यक्षादिप्रमाणैरपि तस्य साधनत्वं सिद्धमित्याह यज्ञो हीति (see १.१.१७.) । यस्मादनस एव ग्रहणं तस्माद्ग्रहणमन्त्रा धूर्नीत्यादय अनोऽवयवलिङ्गा दृश्यन्ते न पुनः कोष्ठगतस्य कुम्भीगतस्य वा धान्यस्य कुम्भीशब्दस्तन्निष्ठं धान्यं लक्षयति ॥ अभिमतमाह भस्त्राया इति । षष्ठ्यर्थे चतुर्थी । तस्मिन्पक्षे भस्त्रायाः के मन्त्रा इत्याह तद्वृषोनिति । उक्तार्थे । तदा तु तान्येव यज्ञभस्त्रायाः प्रतिपादिकानि स्युरिति हे भस्त्रे या वै धूरसि इत्येव भस्त्रापक्षे विशेषः । यानि यजूंषि प्रकृतावनस्यासन् तान्येव भस्त्रायामपि स्युः । निर्ममे [°मे AC.] अनुतिष्ठानि ॥७॥

पात्रीतो ग्रहणे धर्मविशेषमाह । तस्मिन्पात्रीपत्रे तस्या अधस्तात्स्फ्यमुपोह्य उपनिधाय see कात्या° २.३.२८.२१. । अनसो ग्रहणे स्फ्योपहितपात्रीतो ग्रहणेऽनिशयितं प्रयोजनमाह यत इति । यतो यं स्फ्यमाश्रित्य युनजाम यत्रैव योगं पात्रयाम तत्रन्तस्मिन्नेव स्फ्ये विमुञ्चाम वियोगमपि कारयाम । अनसो निर्वापपक्षे हि युक्तप्रभृता शकटस्य धुरानिंदध्यात् पात्रीतः पुनर्निर्वापे तदाधारभूते स्फ्ये तयोर्निधानं विमोकः see कात्या° ३.६.१२.२०. ॥८॥ अथ धुरः समन्त्रकमभिमर्शनं विधास्यंस्तदुपोद्घातवेन देवतामूयतां तस्याः प्रतिपादयति तस्येति । एतद्गुरुमनसो योगे खलु ये बलीवर्दा वहन्ति एषां वहं वहनसाधनं स्कन्धरूपमङ्गमग्निदग्धमिव दृश्यते अतो वोढव्या धूरन्यातिमर्कत्यवसीयते ॥ शकटनिर्वापस्य प्राशस्त्यातिशयं द्योतयितुं तस्मिन्वेदिहविर्धानयोः संपत्तिमाहाथ यदिति । शकटस्याधःपतनं वारयितुमीषाग्रदण्डाग्रोत्तम्भनार्थौ मेथी कन्तम्भी ईषाद्वयं यत्र संमृतं ततः प्रत्यग्भागः तयोरीषयोर्मध्यदेशः प्रउगम् तच्च पश्चाद्विस्तृतम् पुरस्ताद्धमोयः वेदिरपि तथाविधा त्रिंशत्पदानि पश्चात्तिरश्ची भवति चतुर्विंशतिं पुरस्तात्तिरश्चीति श्रुतेः अतस्तत्साम्यात्प्रउगस्य वेदित्वव्यपदेशः । धान्यनिधानाय परिश्रितप्रदेशो नीडः हविर्धानमपि परिश्रितम् परिश्रयणसाम्यान्नीडस्य हविर्धानत्वम् ॥९॥ धुरि भवोऽग्निर्धुर्यः । हविर्ग्रहणाय शकटस्य परिश्रितप्रदेशं पश्चाद्भागं यान्यंस्तं धुर्यमग्निमतिक्रमिष्यन्भवति तदवगमे च स क्रुध्येत् तस्य प्रमादनागतत् धूरसीति मन्त्रोच्चारणेन तस्मा एवाग्नये निह्नुतेऽपनयति अतिक्रमजनितं स्वापराधं प्रशंस्य प्रसादयति स चाग्निरतिक्रामन्तमप्यध्वर्युं न बाधते ॥१०॥ तन्मन्त्रोच्चारणेन शत्रुहिंसनं महर्षिव्यवहारेण संवादयति तदिति । अर्धमासशः पौर्णमास्यां दर्शे च ॥११॥ ध्वातं तृप्तं देवानां तृप्तिजननं पर्याप्तमित्यर्थः । ध्वृ तृप्ताविति [धा° २२.११.] भ्वादिको धातुः । मा ह्वार्षीत्कौटिल्यगतिर्मा भवतु । ह्वनिषेध एवाह्वलाशब्दार्थः ॥१२॥ शकटस्यारोहणं विधत्तेऽथेति । पस्पार पालयामास स्पृ प्रीतिपालनयोः [धा° २७.१३.] See १.३.१. ॥१३॥ पुरोडाशीयानां व्रीहीणां समन्त्रकमवेक्षणं विधत्तेऽथेति । वायुः प्राणो भूत्वा नासिके प्राविशदिति श्रुतेः प्राणवातयोरैकात्म्यम् तथा सति मन्त्रेणैव प्राणात्मकाय वाताय तद्रूभवनकीर्तनं कुरुते ॥१४॥ यदि तु तत्र तृणादिकं न भवेत्तदा पुरोडाशीयं व्रीहिसमूहमेवानेन मन्त्रेणाभिमृशेत् ॥१५॥ अभिपद्यते आलभते स्पृशति । यज्ञो धानाकरम्भादिरपञ्चहविष्क इति पञ्चसंख्यायोगसाम्यात्पाङ्क्तः । तत्तथा सत्येतदेतेन पञ्चशब्दोपेतमन्त्रोच्चारणेनात्रास्मिंक्कटे पाङ्क्तयज्ञमेव धारयति ॥१६॥ भागं दोग्धीति भागदुघो भागप्रदः दुहः कब्घश्चेति [पा° ३.२.७०.] । तादृशः पूषा पाणितलाभ्यां सर्वस्य अन्नस्याशनं भोज्यमन्नमुपनिधाता उपनिधातुमुपस्थापयितुं शीलवान् ताच्छीलिकस्तृन् न लोकेति [पा° २.३.६९.] कर्मणि षष्ठ्याः प्रतिषेधः ॥१७॥ असमदमकलहं परस्परमविरोधम् ॥१८॥ स्वस्वनामोद्देशेन गृहीतं हविः क्षणमेव ताः सर्वा देवता मन्यन्ते । यत्काम्या यस्य फलस्येच्छया । काम्यचेति [पा° ३.१.९.] यच्छब्दादिच्छार्थे काम्यच् तस्माद्देवतानामावश्यमादेष्टव्यम् । आग्नेयवद्यथाक्रममग्नीषोमीयादीनि हवींषि गृह्णीयात् ॥१९॥ निरुप्तशेषस्याभिमर्शनं विधत्तेऽथेति । तत्तत्र शकटे यस्मादेव स्थानाद्गृह्णाति तत्स्थानं वर्धयति ॥२०॥ परिवेष्टितमेव खल्वनो भवति धान्यनिधानार्थं तन्मध्येऽवस्थितस्याध्वर्योश्चक्षुः पाप्मगृहीतमिव काचकामलादिदोषदूषितमिव दुष्टं न समर्थं भवति कथं तस्य दर्शनोपाय इति तदुच्यते ॥ तत्तथा

सति एतन्मन्त्रकरणकेन प्रेक्षणेन स्वःशब्दप्रतिपादितं यज्ञादिचतुष्टयमर्यमादिं प्राच्यां दिशि प्रथमत उपलभ्यमानमतोऽस्माच्छकटस्थानादवलोकयति ॥२१॥ तं शकटस्थानात्प्रागवस्थमनुसृत्य इतोऽस्माल्लोकात्प्रच्यावयितुं तस्य च यजमानस्य कुलं विक्षोभयितुं समर्थाः ईश्वरे तोसुन्कसुनौ इति [पा° ३.४.१३.] तोसुन्प्रत्ययः । दृंहति दृढीकरोति ॥ निरुप्तेन हविषा सहाग्निसमीपगमनं विधत्तेऽथेति । उर्विति मन्त्रस्य प्रागाम्नातं ब्राह्मणमतिदिशति सोऽसाविति । अन्तरिक्षं वा अन्वनु रक्षश्चरतीत्यादिको (see k.४.) यो वाक्यशेषः सोऽसावेवात्राम्नातस्यापि तस्य मन्त्रस्य बन्धुरनुकूलः ॥२२॥ गार्हपत्ये आहवनीये वा यस्मिन्नग्नौ श्रपणं तस्य पश्चात्पात्रासादनम् निरुप्तस्य हविषः सादनं च कर्तव्यम् ॥२३॥ २ ॥१॥

इडापिङ्गलादिनाडीद्वारा बहिर्निर्गच्छन्प्राणः प्राङित्युच्यते तयैव द्वारा पुनरन्तः प्रविशन्प्रत्यङ्ङिति तावेतौ वृत्तिभेदौ प्राणोदानावित्युच्येते तत्र प्राङ् संचरन्प्राणः उत् ऊर्ध्वदेशादानयति अन्तः प्रवेशयानुगुणं चेष्टतऽइत्युदानः तस्य च शब्देन प्रत्यङ्मुखोऽपानो विवक्षितः । एवं द्विधाभिन्नस्यैतस्य वायूवाख्यस्य पवित्रस्य परिमाणमनुसृत्य तत्पवित्रयोर्द्वित्वम् ॥२॥ द्वित्वपक्षमेव निगमयति द्वेऽइति अथ यः प्राणापानयोः संधिः स व्यान इति श्रुतेर्व्यानस्य संधिरूपतया तदुभयानतिरिक्तत्वाद्द्वित्वपक्ष एव श्रेयान् ॥ प्रोक्षत्याभिरिति प्रोक्षणय आपः ॥३॥ आवृत्य शयनं कृतवान् वरणाद्वृत्र इति नाम ॥४॥ पूतिर्दुर्गन्धिः । बीभत्सां चक्रिरे जुगुप्सन्ते स्म मान्बधदान [पा° ३.१.६.] इति बधर्वैरूप्ये सन्प्रत्ययः । तत्संस्पर्शं परिहर्तुमुपर्युपरिवर्तमाना अतिपप्लुविरे जलाशयमतिक्रम्य तीरदेशं प्राप्ता आसन् पुङ्गताविति धातुः [धा° २२.६२.] पुतास्य (पु° C.) ता आपो दर्भात्मना परिणताः । अनापूयिता इति आ समन्तात्पूर्वं दौर्गन्ध्यं प्राप्ताः आपूयिताः पूयी विशरणे दुर्गन्धे च [धा° १४.१२.] कर्तरि निष्ठा छान्दस इट् । एतासु दर्भात्मना परिणतजलव्यतिरिक्तास्वमेध्ययागादकं किंचित्संसृष्टमिव भवति । एवमनापूयिताब्विकारदर्भमयाभ्यां पवित्राभ्यामासामपामुत्पवनं पूयसंसर्गितं तदमेध्यत्वमपलक्षि ततश्च विधास्यमानं प्रोक्षणं मेध्याभिर्मेधाभिः शुद्धाभिरद्भिः कृतं भविष्यतीत्यर्थः ॥५॥ अग्निहोत्रहवण्या पात्रेण साकं प्रोक्षणीरपः । उदिङ्गयति ऊर्ध्वं सेचनेन चालयति । अग्रे पुरतो वर्तमानं समुद्रं गच्छतीत्यग्रेगुवः । अग्रेपुवः आपः जलत्वमिषवार्थमासिच्यमाना यष्टव्यदेवताभ्यः पूर्वं सोमरसमास्वादयन्ति तेन सोमपानेनाग्रे प्रथमं स्वात्मानं पुनन्तीति । अग्रे प्रशस्ते अद्यास्मिन्काले ॥७॥ प्रोक्षणपात्रगतेनैवोदकेन तत्पात्रगतमुदकं प्रोक्षयित्वा तत्तेन मन्त्रपाठेन प्रोक्षणजनितमपराधमेताभ्यो प्रोक्षणीभ्यो निह्नुतेऽपनयति । एवं संस्कृताभिरद्भिर्हविषः प्रोक्षणं विधत्तेऽथेति । बन्धुरनुकूलं स्तावकमर्थवादवाक्यं सर्वस्यापि प्रोक्षणस्यैकविधमेव अतस्तत्सर्वत्र योजनीयमिति भावः ॥१०॥ तथा वर्धकिः ॥१२॥ ३ ॥१॥

अथ निरुप्तव्रीहियवावहननार्थं कृष्णाजिनादानं विधत्तेऽथेति । अवकायापक्षिप्य छो छेदने [धा° २६.३७.] ॥१॥ कृष्णाजिनस्य यज्ञरूपत्वं वक्तुं त्रयीमयत्वं प्रतिपादयति तस्येति । बभ्रूणि पिङ्गलवर्णानि हरीणि हरितवर्णानि ॥२॥ शिल्पं चित्रं रूपम् see यास्क° ऐ° ४.१. । सोमाङ्गभूता दीक्षापि कृष्णाजिनस्योपरि क्रियते । यदि भूम्यामेवावहननादिकं कुर्यात्तदा तस्य हविषोऽवश्यं स्कन्नदोष इत्यभिप्रायः ॥३॥ कृष्णाजिनवत्प्रसक्तमवधूननं पात्राणां निषेधति अतिनत्येवेति । न कवलं रक्षांसि निरस्यति तत्संपर्कादयज्ञियमपि अपास्यति यज्ञीति

॥४॥ **The explanation of the conclusion of k.5., of k.6. and of the beginning of k.7. is wanting in ABC.** तदिति कृष्णाजिनोलूखलयोरन्योऽन्यं हिंसा मा भूदिति पृथिवीकृष्णाजिनयोरैकमत्यप्रार्थनं वदतीत्यर्थः ॥७॥ यज्ञो यज्ञसाधनं हविरुलूखले प्रत्यष्ठात्प्रतिष्ठितमभूत् प्रासारि प्रसारितो विस्तारितोऽभूत् ॥८॥ अवदवतु तर्पयतु ॥९॥ निर्वापादौ मन्त्ररूपाया वाचो हविःकरणसाधनत्वाद्वागेव हविःकृत् ॥११॥ हविःकृदाह्वानमन्त्रे विशेषमाहतानीति । राजन्यबन्धोः क्षत्रियजातेः । आपस्तम्बस्तु राजन्यवैश्ययोर्विपरीत्येनासूत्रयत ॥१२॥ पुरा खल्वेतदाह्वानानन्तरं जाया हविष्कदुपोत्तिष्ठति अतस्तदानीं जायैव हविःकृद्भूतस्मादिदानीमप्येतदाह्वानानन्तरं जाया वान्यः कोऽपि ऋत्विग्वा उपोत्तिष्ठति स एव हविःकृदित्यर्थः ॥ हविःकृदाह्वानसमये दृषदुपले शम्यया समाहन्ति ॥१३॥ समाहननजनिताया वाचो यज्ञविघातकासुरराक्षसादिनिवृत्तिहेतुतामुपपादयितुमितिहासमुदाहरति मनोरिति । पापं निकर्षं पराजयं सचते प्रापयति ॥१४॥ असुर एव देवो यस्य स असुरदेवः असुरालुः । आत्रमिति ह्रस्वोच्चारणम् ॥१५॥ मनोरौ वेति [पा° ४.१.३८.] मनावी । वदन्त्यै षष्ठ्यर्थे चतुर्थी यत्र यस्मिन्देशे वदन्त्यास्तस्याः शब्दं शृण्वन्ति । इदानीं मनुष्यशरीरान्निर्गतवाचः श्रवणादस्माकं पापीयः अतिशयितं पापं पराजयः प्राप्नोति ॥१६॥ स खल्वृषभः देवानां मधुरवागासीत् ॥१८॥ नलादीनि द्रव्याणि शूर्पस्योपादानभूतानि ॥१९॥ उलूखलान्निःकृष्यावहतान्व्रीहीन् शूर्पे प्रक्षिपति ॥ चशब्दाज्जविये च मंशा संज्ञानं समानज्ञानवम् ॥२०॥ तुषाणां राक्षसभागत्वात्तन्निरसनं विधत्ते ॥२१॥ वितुषीकृतानां तण्डुलानां व्रीहीणां च पृथक्करणं विधत्तेऽथेति ॥ यदा यस्मिन्काले एते व्रीहितण्डुलाः एतद्विवेचनं प्राप्नुवन्ति तस्मिन्समये यत्र यस्यां पात्र्यामधि उपर्येनानपविनक्ति ॥२२॥ तत्पात्रीगतं हविरनुमन्त्रयते ॥२३॥ तस्मिन्फलीकरणे शाखान्तरीयं मन्त्रविधिमनुवदति तद्वेति । तं निषेधति तदु तथेति ॥२४॥ ४ ॥१॥

कपालोपधानपेषणयोर्युगपदनुष्ठानं विधत्ते स इति । आग्नीध्रः कपालानामुपधाताध्वर्युः पेषणार्थं दृषदुपले उपदध्यात् ॥१॥ शिरःकपालान्तर्गतं मांसं मस्तिष्कः ॥२॥ अङ्गारविभजनार्थं काष्ठमुपवेषः । धृष्णोत्यनेनेति धृष्टिः । अथ यज्ञे एनेन काष्ठेन तदङ्गारादिकमुपालभते प्राप्नोति ॥३॥ अग्निगतामुष्मांशस्य निरसनं विधत्ते तेनेति ॥४॥ शुद्धादग्नेः पुरोडाशश्रपणार्थमङ्गाराहरणं विधत्तेऽथेति । आस्कौति विभजति स्कुञ् आप्रवणे [A. °वणे B. C. see धा° ३१. ६.] । योऽग्निर्देवान्यजति ॥५॥ नेन्नोऽस्माकं हविषो भागेनैव राक्षसादय उपोत्तिष्ठेयुरित्यनेनाभिप्रायेणाङ्गारस्योपरि कपालोपधानं कृतवन्तः ॥ यजुषा आ देवयजमिति मन्त्रेण संस्कृतवादेव एव हि कपालोपधाने मुख्यो नान्य इत्यर्थः ॥६॥ समानं जायन्तऽइति सजाता ज्ञातयः ॥७॥ दक्षिणहस्तेनान्यस्याङ्गारस्याहरणं विधत्तेऽथेति । नेदिहेत्यादि यदि सव्यपाण्यङ्गुल्या अभिनिधानं न कुर्यात्तदा इहास्मिन्कपाले उपर्यङ्गारनिधानात्पुरस्तादेव राक्षसाः प्रविशेयुः अतः कपालस्योपर्यङ्गाराध्यूहनपर्यन्तमङ्गुल्याभिनिहितमेव भवेत् ॥८॥ पुरा पुरोडाशाधिश्रयणात्स्थाप्य ॥९॥ मध्यमकपालात्पूर्वदेशे स्थाप्यस्य कपालस्योपधानं विधत्ते ॥११॥ लोकत्रयातिवर्तिनश्चतुर्थस्य सद्भावोऽसद्भावश्च अनद्धा वै अस्माकमप्रत्यक्ष एव लोकत्रयवत्प्रसिद्ध्यभावात् ॥१२॥ कपालानि ॥१३॥ अवहननवत्पेषणम् see १.४.४. ॥१४॥ कृष्णाजिनस्योपरि । पेषणीयतण्डुलानां धारणाद्धिषणा पर्वतावयवत्वात्पर्वतीति एतदुभयं प्रसिद्धमिति हिशब्दयो-

र्थः । पार्थिवेन धारणाख्येन रूपेण योगादेषा दृषदियमेव पृथिवीति स्तुतिः ॥१५॥ दृषदः पश्चाद्भागे शम्यामु° । विष्टब्धे विविधमधस्तादुपरिष्टाच्च धारिते ॥१६॥ दृषद उपरि । उपलातिशयेन दृषदः सकाशादल्पपरिमाणा । १.४.१३. इति यज्ञयोः समाहननं विहितं तत्र दृषदुपलयोरुभयत्रावस्थानादनूवम् तन्मध्येऽवस्थानाच्छम्यायाः शिल्लावम् ॥१७॥ पेषणार्थं दृषद उपरि तण्डुलान्प्रक्षिपति । धिनवत्प्रीणयेत् धिवि प्रीणनार्थः [धा° १५.८४.] ॥१८॥ नासिकाभ्यां बहिर्निर्गच्छन् श्वासरूपो वायुः प्राणः ताभ्यां देहे पुनः प्रविशन्नुदानः अन्नपानादिरसं विविधं सर्वासु नाडीषु अनितीति प्रेरयतीति मध्यवृत्तिर्वायुर्व्यानः ॥ प्रोहति कृष्णाजिने प्रक्षिपति ॥१९॥ हविः देवानां जीवं प्राणधारणायुक्तमेव सदमरणसाधनं भवति अथैवं सत्येतदमरणसाधनं हविरवहननपेषणाभ्यामृत्विजो मारयन्ति ॥२०॥ तथा सति निर्जीवत्वात्तस्यामृतत्वसाधनत्वं न युक्तमिति भावः मन्त्रप्रयोगेन तस्य निर्जीवत्वं परिहरन्प्राणादीनेव पुनरस्मिन्हविषि स्थापयति ॥ पिंषन्तीति एवं समन्त्रकमध्वर्युणा पेषणे कृते सति यजमानपरिचारका अवशिष्टं सर्वं चूर्णीकुर्युः तथा उपहितानि च कपालानि अङ्गारैः प्रदीप्तानि कुर्युः ॥२१॥ यदैवाध्वर्युः पिनष्टि अथ तस्मिन्नेव समये एकोऽन्य आग्नीध्रादिः आज्यं निर्वपति तच्च सर्वदेवतासाधारणमिति देवतादेशेन रहितेनैव यजुषा गृह्णीयात् । देवतानाम निःशेषोक्तं यस्मिन् तन्निरुक्तं तद्विलक्षणमनिरुक्तं तादृशं च महीनामित्यादि यजुः तत्रप्रसिद्धदेवतावाचिपदस्यानुपलम्भात् । मख्यते पूज्यते मखः ॥२२॥ १ ॥२॥

पिष्टानां पिण्डकरणार्थं पात्र्यां संवापं विधत्ते । पवित्रयुक्ते पात्रे । see १.२.१७. ॥१॥ वेदिमध्ये । उपसृजत्याभिरिति पिष्टसंसर्जनार्था आप उपसर्जन्यः ताभिः सहागच्छत् तास्वानीताः पिष्टानामुपरि पवित्राभ्यां प्रतिगृह्णीयात् ॥२॥ संयौति सम्यग्मिश्रीकरोति । जनयत्यै जननाय अधिवर्जनं पुरोडाशस्याग्नावधिश्रयणं करिष्यन्खलु संयौति यथा खल्वधिवृताः पुरोडाशाऽग्नेः सकाशाज्जायेत ॥३॥ स खल्वध्वर्युर्यस्मिन्काले तस्य हविर्द्वयस्य पुनः संहरणमेकीकरणं करिष्यन् भवेत्तदानीमिदमग्नेरित्येकं भागमभिमृशतीदमग्नीषोमयोरित्यपरं तावेतौ यथासंख्यमाग्नेयाग्नीषोमीयपुरोडाशौ ॥ पुरोडाशकपालस्याज्यस्य चाग्नेरुपरि अधिश्रयणस्य समानकालतां विवक्षिषुः कर्तृभेदमाह । एष अध्वर्युः । आग्नीध्रः २.१.२२. इत्यतः अदःशब्देन परामृश्यते ॥४॥ आज्यं यज्ञशरीरस्यार्धभागः उपस्तरणाभिघारयोः प्रयाजादीनां च तत्साध्यत्वात् इतरोऽर्धः पुरोडाशादिहविः । सहाधिश्रयणेन तदर्धद्वयमेकीकृत्य अग्निं प्रापयावेत्यध्वर्योराग्नीध्रस्य चाभिप्रायः ॥५॥ अधिवृणक्ति अग्नावुपरि वृणक्ति वर्जयति श्रपणार्थं स्थापयति । घर्मस्य सोमयागाङ्गस्य यत्प्रवृञ्जनं सोमे तत्सदृशमेवैतत्पुरोडाशप्रवृञ्जनम् ॥७॥ उपहितेषु कपालेषु तं विस्तारयति ॥८॥ सत्रेति निपातोऽनेकार्थत्वादत्रातिशयवाची सत्रा पृथुं अतिपृथुम् । व्यृद्धं विगतगर्धिकम् ॥९॥ पश्चात्तरमयवदाति कस्तदिति । यं देवतासौविष्टकृतंडायवदानपर्याप्तमेव मन्येत तत्परिमाणविशिष्टं ॥१०॥ क्षिण्वन्ति हिंसन्ति विवृहन्ति विश्लेषयन्ति क्षिणु हिंसायाम् [धा° ३०.४.] ॥११॥ तं पुरोडाशम् परितोऽग्निर्यस्य स पर्यग्निः ॥१२॥ मृतं पक्वम् श्रा पाके [धा° २४.३५.] निष्ठायां श्रृतं पाकेऽइति [पा° ६.१.२७.] निपातितम् ॥१४॥ अभिवासयति साङ्गारेण भस्मना छादयति । नग्नः स्वभावतो विवसनः मुषितः चोरादिभिरपहृतवसनः ॥१६॥ उच्यते

ऽनेनेति यज्ञः पुरोडाशः स म्लानिरहितोऽभूत् ॥१७॥ निर्णिज्यते शोध्यतेऽनेनेति निर्णेजनमुदकम् ॥१८॥ २ ॥२॥

यं होतृकर्मणि प्रावृणत ते देवा इत्यर्थः । प्राधन्वत्प्रागाद्दद्रियत धवि गमने [धा° १५.८८.] । भीषा पूर्वाग्निवन्मरणभयेन निलीनोऽन्तर्हितो बभूव । ष्ठिवु निरसने [धा° १५.५२.] । अप्रपदनमनाश्रयभूताः । वः पञ्चम्यर्थे चतुर्थी युष्मत्सकाशात् । ततो निष्ठीवनलक्षणाद्वीर्यधारणाभ्यामोऽद्भ्यः सकाशात् ॥१॥ यद्यदानीं ब्राह्मणः पुरोहितः । तं बध्यं बधार्हं ज्ञातवन्तः । अनन्तरं चैनं विश्वरूपं त्रित एवेन्द्रसहाय्यार्थं जघान इन्द्रस्य तद्धननजनितात्पापादतिमुक्तोऽभवत् यस्मात्स इन्द्रो देवः अतोऽस्मिन्पापसंश्लेषो न युक्त इत्यर्थः ॥२॥ ते लौकिका जना विश्वरूपहननानन्तरमेतदूचुः । एषु त्रितादिषु यद्विश्वरूपबधजनितमेनस्तद्यज्ञो मृजीत शोधयेदिति अत एतत् एतेन पात्रीनिर्णेजनादिनिनयनेन एषु तदेनो यज्ञः संशोधयति तस्माद्ब्रह्महननपेषणादिजनितस्यैनसो रूपं पात्र्यादिनिर्णेजनमाप्त्येभ्यो निनेतव्यमित्यर्थः ॥३॥ वयमपीदमेनः परः परस्तादन्यत्राधारातो अन्यत्रास्मत्तो नयाम ॥४॥ अन्वाहरति यज्ञसंबन्धि दोषजातं परिहरत्यनेनेति अन्वाहार्यो नाम ऋत्विग्भ्यो देय ओदनः ॥ निनीतमुदकं गङ्गारेण प्रतपति ॥ एवं संस्कृतं पुरोडाशं पशुत्वेन स्तौति ॥५॥ यज्ञियः सारांशो मेधः ॥६॥ अस्य यजमानस्य ते एते पुरुषादयः आलब्धाः सन्तो यत्परिमाणविशिष्टवीर्यवन्तविः स्युः अस्य व्रीहियवयोः सर्वपशुसारत्वं विदुषो यजमानस्य तन्निष्पादितं पुरोडाशादिकं हविः तावद्वीर्यवज्ञविरेव भवति एवं च पशुरूपमेव संस्क्रियते । लोमत्वगादिपश्वावयवयोगाच्च या पशौ पाङ्क्तसंपद्भिरुच्यते सात्रापि पुरोडाशे विद्यते ॥७॥ लोमत्रत्पिष्टानां सूक्ष्मत्वाद्बहुत्वाच्च । त्वचेव श्लक्ष्णीभावदर्शनात् । दारुणः कठिनः । अस्थ्यन्तर्गतो धातुर्मज्जा । एषो एषा उ ॥८॥ अशितव्यं भक्षितव्यम् ॥९॥ ३ ॥२॥

वेदिकरणार्थं स्फ्यादानं विधित्सुः स्फ्यस्य वज्ररूपत्वं वक्तुमितिहासं व्याचष्टे इन्द्र इति । न्यूनाधिकाराहित्येन तृतीयांशवत्त्वं दुर्लभमित्यभिप्रेत्य पक्षान्तरमाह यावद्वेति तृतीयाद्भागान्न्यूनमधिकं वा यावदेव किंचित्तावानेव स्फ्यः । चतुर्थभागस्य परिणामप्रकारमाहाथ यत्रेति तत्तत्र देशे प्रहृतः स वज्रः शकलो भूत्वा शीर्णोऽभूत् ॥१॥ संव्याधे युद्धे ॥२॥ संश्यति सम्यक्तनूकरोति तीक्ष्णीकरोति ॥५॥ स्तम्बयजुर्हरणं विधित्सुः तस्यासुरनिर्हरणलक्षणं प्रयोजनं वक्तुमाख्यायिकामाह देवा इति । यद्वदा खलु । ततोऽनन्तरक्षणम् ॥८॥ अनपजय्यं न जेतुं शक्यं पुनरुत्थानरहितम् see पा° ६.१.८०. ॥९॥ पलाय्य अय गतौ [धा° १३.१.] क्त्वो ल्यप् see पा° ८.२.१९. ॥१०॥ इतोऽस्माद्वेदिलक्षणात्स्थानादुपसंहृतान्प्रतिबद्धगतीनसुरान्करिष्याथ । अभिनिधास्यामः अभितः सर्वतो निरुद्धगतीन्निहितान्करिष्यामः । यच्चतुर्थं लोकजातमस्ति अस्माकमप्रत्यक्षं तेनापि बाधितान्करिष्यामः । ततोऽनन्तरं पुनः संगता न भविष्यन्ति विशीर्णा बाधिता एव भवेयुः ॥११॥ यदत्र स्तम्बयजुर्हरणं करिष्यते एतन्निदानेन मूलकारणेन निरूप्यमाणं सत् देवैः कृतं तदसुरनिरसनमतो यज्ञविघातकासुरनिर्हरणार्थं स्तम्बयजुर्हरणमिति विधिरूह्येयः ॥१२॥ वेदेरन्तरतः परीत्य वर्तते ॥१३॥ शत्रुनिर्हरणमपि तत्प्रयोजनम् ॥ अध्वर्युरस्याः पृथिव्या एव सकाशात्सर्वं स्तम्बयजुर्हरति नान्तरिक्षादेः अन्तरिक्षद्युलोकयोर्हर्त-

हितं तेनाव्यवधानेन तदस्तु जामि भवति अत्र तु व्यवधानम् आग्नेयेन अनेन वक्ष्यमाणेन च खल्वजामि । केनेति । उच्यते । आज्यस्य द्रव्यस्येतरम् इतरत्कर्म उपांशुयाजाख्यं तथा पुरोडाशस्येतरं धानाख्यम् अन्योन्यापेक्षयोभयोरितरत्वम् अन्यदिवेति द्रव्यभेदादेकदेवत्यमपि कर्मद्वयमन्यदिवान्यदिव भवति अतोऽन्ययोर्न जामितास्ति ॥ मन्त्रभेदेन चाज्यभागप्रधानद्वययोरजामित्वम् प्रधानद्वययोर्जुषाणा इत्यस्यासंभवात् यद्यप्याज्यभागप्रधानयोर्देवतैक्यं तथाप्याज्यभागस्य अचमग्निर्वृत्राणि [वाज° स° ३३.९.] त्वं से प्रासीत्यादिकामनुवाक्यां [वाज° स° ११.५२.] कृत्वा जुषाणोऽग्निराज्यस्य वेतु जुषाणः सोम इति जुषाणेन यजति । प्रधानाभ्यां तु क्रमेण अग्नीषोमा योऽअद्य वाम् अग्नीषोमा सवेदसेत्यनूच्यऽर्चमान्यं दिवो मातरिश्वा जभार युवमेतानीत्यृग्भ्यां [ऋक्स° १.१४.१.२.१.६.५.] यजति ॥ तथाज्यपुरोडाशयोरुपांशु उच्चैश्च भेदादजामित्वम् । उपांशोः प्रजापतिर्देवत्वात्तस्य प्रजापतिरुचितामनुष्टुप्छन्दस्कामग्नीषोमा योऽअद्य वामित्येतामनुवाक्यामनुब्रूते ॥२७॥ उपस्तर्य उप पार्श्वेन गत्वा ॥२८॥ आज्यभागोपांशुयाजयोर्जामितापरिहाराय याज्यापुरोऽनुवाक्ययोर्वैलक्षण्यमुक्त्वा प्रशंसति । उदान्तौ जुषाणशब्दयुतौ मन्त्रौ तत्त्वादानुष्ठानमनु तत्सामर्थ्यात् । अन्यत्र अक्ष्कारणादेतत्कर्मान्यतरतोऽस्थि अस्थिवद्दृढं करोति तस्मादन्यतरत अक्ष्कारणं युक्तम् ॥२९॥ द्विविधप्रजाव्यतिरेकेण प्रजान्तराभावात्सर्वप्रजालाभाय याज्यानुवाक्यायुगलयोरुक्तं वैलक्षण्यम् ॥३०॥ The explanation of ३१. ३२. is wanting in ABC. । पक्षान्तरमाह । न पूर्वां पौर्णमासीमुपवसेत् उत्तरामेव । तस्मिन्पक्षे गुणमाह । यथा कश्चित्परराष्ट्रं प्राप्य प्रतिमुखं पलायमानं हननोद्योगरहितं मन्यकचूर्णितं करोति ॥३३॥ इत्थं पक्षान्तरं सोपपत्तिकमभिधाय प्रथमं पक्षं सिद्धान्तयितुं पुनरुपादत्ते । यथा कश्चिन्मन्दोऽन्येन पूर्वमेव पातितं पुनः स्वयं पिंष्यात् । उत्तरानादरे कारणान्तरमाह सोऽन्यस्येति । उत्तरोपवासी अन्येन यत्कृतं कार्यं तस्यानुकारी अन्येनाध्यवसितस्य पुनराध्यवसायी भवति । संप्रत्युपवसन्तं दृष्ट्वा तदनुकर्तुं स्वयमपि परश्वस्तावुपवसतीत्येवं प्रतिभवनात् ॥३४॥ संप्रतिपक्षं सिद्धान्तयितुमाख्यायिकामाह । संधयः विस्रस्ता आसन् । ऋतुमुखानि वसन्तादीनि ॥३५॥ संहातुं संगतो भवितुम् । सोमव्यतिरिक्तपुरोडाशादिसाध्या हविर्यज्ञाः ॥३६॥ स एव प्रजापतिः कालात्मकः दृढपर्वा संवत्सरमध्ये यदन्नं व्रीह्यादिरूपं पक्वं भवति तत्सर्वमभिलक्ष्य भोक्तुमुत्थितवान् कालावयवानां विच्छेदाभावात्तत्कालोचितमन्नं भोगायोग्यमासीत् (भोगयो° the mspts.) । इदानीमुपवासयोग्यं पर्व विधत्ते संप्रति हैव पर्वविस्रंसनसमकालऽएव प्रजापतेः पर्व संप्रत्युपवसन् चिकित्सितवान्भवति । प्रजापतिवत्स्वयमपि सर्वान्नादो भवति ॥३७॥ आज्यभागस्थाननियममाह ॥३८॥ अथ केषांचित्पक्षमाह । अविज्ञान्यमिव विज्ञानेन हीनमिव वैषम्याभावेन सामान्यस्थानविज्ञानस्याशक्यत्वात् ॥ तस्य कस्य पुरस्तादित्यत आह हवींषीति । उत्तरहविःपुरोभागे विशेषमाह यत्रोऽइति ॥३९॥ आज्यभागयाज्यानुवाक्ययोर्यादृग्जुषाणवैलक्षण्यं पूर्वमुक्तं [क° २७.] तदपि तयोश्चक्षुष्ट्वप्रयुक्तम् । अस्थन्नस्थनि मुखे अस्थिमये सति अक्ष्यजुषोः [अक्षुषयोः A. अक्षजुषाणयोः?] काठिन्यमृदुत्वात्साम्यादस्थ्यनस्थ्यात्मता ॥४०॥ आग्नेयसौम्ययोराज्यभागयोर्यच्चक्षुष्ट्वं लौकिकचक्षुःसाम्येन समर्थयति । अन्वायत्ते अनुप्राप्ते । आजरसं वयोहानिपर्यन्तं चक्षुर्मोघं न भवति अमुष्मिन् स्वर्गलोकेऽपि सचक्षुरेव संभवत्याज्यभागयोश्चक्षुष्ट्ववेदिता ॥४१॥ २ ॥६॥

अथामावास्यानि हवींषि विधातुमाख्यायिकामाह । अबलीयानहमिति मत्वा नास्तृषि स्तृङ् हिंसायां लुङ् अहं न हिंसितवानस्मीति भीतः सन्पुनर्बाधशङ्कया निलीनोऽभूत् । अत्यन्तं विप्रकृष्टदेशं गतवान् परावदिति दूरनाम [निघ॰ ३.२६.] तस्योपसर्गाच्छन्दसि धात्वर्थ इति [पा॰ ५.१.११८.] मतुप् ॥१॥ लब्धेनेन्द्रेण सह एतां रात्रिं रात्रिशब्दो दिनस्योपलक्षणः कृष्णामप्यमावास्यादिवसं संवासितवान् । स इन्द्रो देवानां धनरूपो वासयिता वा यत एवं यतश्च देवानां मध्ये वीरः अतस्तदागमनायास्यैर्विलम्बो युक्तः ॥२॥ अस्माकं य इन्द्रः प्रवासमकरोत्स नो वसुरस्माकमग्निना सह वसतीत्युक्त्वा ताभ्यां सन्निभावेन सह वसन्नामिन्द्राग्निभ्यामेतद्द्वादशकपालं हविरिति शेषः प्रयच्छाम इत्यर्थः । मानुषं मनुष्येभ्यः कर्तव्यं सत्कारणम् ॥३॥ व्यस्मये विस्मितोऽभवं विगतप्रबले स्मयदर्शनात् अतः कृशोऽस्मि तस्मादिदं काठिनं पुरोडाशं मां न प्रीणयति अतः मम प्रीतिकरं हविः संपादयत ॥४॥ स एत्त्राभयतश्चन्द्रदर्शनरहितायां संपूर्णामावास्यायां भूलोकमागत्याप्स्वोषधीषु च प्रविशति स प्रविष्ट एव चन्द्रमा देवधनं यत एषां व्रीहियवसोमादिरूपेणान्नं भवति । इह भूलोके ओषधिषु ॥५॥ तमनुप्रविष्टं सोमं गोभिरनुक्रमेण विविधं स्थापयित्वा धारयित्वैव समभरन् । तत्प्रकारमाह यदोषधीरभक्षयन्गावस्तेन ओषधिभ्यः सोममभरन् तथानुप्रविष्टसोमा अपः पिबन्ति गावस्तेनाप्सु ॥६॥ न श्रयते न तिष्ठति न सात्म्यं भजते । सृतेन पक्वक्षीरेणैव तमश्रयन् ॥७॥ यद्यपि तैत्तिरीयके प्रथमं सृतं पश्चाद्धीति क्रमस्तथाप्यत्र सायंप्रातर्दोहाभ्यां दधिपयसोः संभवादनेन क्रमेणाभिधानमिति द्रष्टव्यं तत्प्रशंसति तत्प्रथमतश्चन्द्रात्मकमेतच्छृतरूपेण परिणतं वस्तुतः समानमेकरूपमेव । the explanation of the rest of the kandikâ is wanting in ABC. ॥८॥ अंशुः सोमः यथाप्याययेदेवं सांनाय्यमपि तथा पीतवतां पाप्मानं हरिमाणं शरीरहरितत्वमपहन्ति ॥९॥ विहितस्य सांनाय्यस्याधिकारितां निश्चेतुं केषांचिन्मतमाह । अनवरुद्धा न संपन्ना ॥१०॥ स्वाभिमतं पक्षमाह । नन्वत्र विषये अन्तरेण मध्ये एव श्रुतवन्तः स्म इन्द्रेणोक्तं वचनम् तत्प्रमाणत्वेन पुनः श्रावयन्निगमयति ॥११॥ अमावास्योपवासस्य कालं विधित्सुः पुरा कल्पमाह । पौर्णमास्यां क्रियमाणो यज्ञविरस्ति तद्वृत्रहननसंबन्धि वृत्रहननाय तदन्तर्गतनिगमनावसरे एकादशकपालोपांशुयाजहविषोः प्रदानात् आमावास्यं तु हविर्वृत्रहत्यमेव वृत्रं हतवत इन्द्रस्याप्यायनार्थं कृतत्वात् । वृत्रस्य चन्द्रत्वं प्रागुक्तम् see ६.३.१७. । एनं वृत्रमेतेन हविषा । अतः सर्वपापक्षयाय चन्द्रदर्शनरहितायां शुद्धामावास्यायामेवोपवसेदित्यर्थः ॥१२॥ उपवासतिथिविषये केषांचित्पक्षमाह । ते चन्द्रदर्शनयुक्तायां चतुर्दशीयुक्तामावास्यायामेवोपवसन्ति यस्मिन्नहनि अव्यवहिते एव भविष्यति काले उदयं न प्राप्नोतीति असौ अविप्रकृष्टं प्रत्यक्षं (विप्रकृष्टमप्रत्यक्षं?) चन्द्रारथं (?थ A.?) खलु देवानामविक्षीणमन्नं भवति अथ चन्द्रक्षयसमनन्तरमेवैभ्यो देवेभ्यः वयमितो लोकात्प्रदास्याम इति । दृष्टोपवासपक्षदोषाभिधानपुरःसरमदर्शनोपवासमेव समर्थयते असोमयाजी वित्यादिना तुशब्दः पक्षं व्यावर्तयति असोमयाजी क्षीरयाजी भवति समेव नयेदिति निगमितत्वात् असौ हैव इतं क्षीरमेव लोकान्तरवर्ति सत् सोमो राजा भवति ॥१४॥ अस्तु । ततः किमित्यत आह । यथा पुरा आमावास्यातः पूर्वदिवसे गावः केवलाश्चन्द्रानुप्रवेशरहिता ओषधीरुपभक्षितवत्यः केवलं चन्द्ररहितमेव पयो दुह्रे दुहते एवं तत्क्षीरयजनं चन्द्रानुप्रवेशरहितं

केवलं भवति अतो दृष्टोपन्यासे चन्द्रस्यौषधीष्वननुप्रवेशेन केवलत्वात्तदानीं क्षीरस्य चन्द्रात्मकान्तराभावात्स पक्षो न युक्त इत्यर्थः । अस्तु । को दोष इत्याशङ्क्यावश्यं चन्द्रानुप्रवेशवता क्षीरेणभवितव्यमित्याह एष वाऽइति एतत्सांनाय्यब्राह्मणवद्व्याख्येयम् । तममावास्यायामप्स्वोषधीष्वनुप्रविष्टं ताभ्य क्षीररूपेण संभृत्य आहुतिभ्यः सकाशात्पुनरुत्पादयति क्षीरयाजी । स एषोऽमुं लोकमागतः पुनराहुतिद्वारेणान्तरिक्षऽउत्पन्नः प्रतीच्यां दिशि दृश्यते ॥१५॥ तदेतच्चन्द्राख्यमन्नं रश्मिमति ॥१६॥ चन्द्रोपक्षयऽएवास्यप्रच्यवः च्युतस्य च भूलोकप्रवेश उक्तः । निष्ठ्या नीचाः उक्तार्थश्चान्निकृष्टतराः ॥१७॥ तपन्नादित्य एवेन्द्रः परमैश्वर्ययोगात् चन्द्रस्य वृत्रत्वं प्रतिपादितम् पुरा अमावास्यातः पूर्वदिवसंप्रत्यस्तं ह्यमुदितोऽपि अर्थनं सूर्याख्यमिन्द्रं प्रत्यमुममावास्यादिवसं प्रति समीप एव आगच्छति अथ इन्द्रस्य विवृतं मुखं प्राप्नोति ॥१८॥ तं ग्रिसन् सूर्य उदेति ॥१९॥ पूर्वस्यां दिशि भक्षितः पश्चाद्भागे निर्गतो रेखामात्रो दृश्यते न च पुनः कलाक्रमेण तस्यैव सूर्यस्याश्रवाय प्रवर्धते ॥२०॥ श्रिशिश्रयानः शत्रून्निरत्रा ॥२१॥ ४ ॥६॥

प्रधानयागः सकलः साख्यानः संप्रकीर्तितः । प्राधान्येनाथ तद्धर्मा निरूप्यन्तेऽथ सप्तमे ॥ तत्रादौ संनिहितत्वात्सांनाय्यधर्माः प्रथममुच्यन्ते । तत्र वत्सापाकरणार्थशाखाछेदं विधास्यन् तदुचितं शाखायाः पर्णं सार्थवादमाह । यत्र यस्मिन्देशे गायत्री पक्षिरूपेण सोममभिलक्ष्यानयनायागच्छन्त्याहरन्त्या ("च्छदाह"?) अपाधस्ता (?°वस्ता AC.) अधस्तात्प्रदेशेऽभ्यायत्य पर्णं प्रचिच्छेद वाशब्दश्चार्थे गायत्र्याः सोमस्य च । पतितात्पर्णादुत्पन्नः पलाशः तस्मात्सोमगोशस्यैव संपादितप्रायत्वादस्यैव शाखाच्छेदनम् ॥१॥ समवासीत्ति संयोजयत्ति । वायोर्गवां तर्धकावसमर्थनाय सर्वगणद्धर्धकतामाह ॥ शाखान्तरे पठितं मन्त्रमनूद्य निराचष्टे see तैत्तिरीयसं° १.१.१. । यदेनं भागं ब्रूयाद्यजमानस्य द्वितीयः शत्रुरुपागच्छति अतो न ब्रूयात् ॥३॥ व्याकृत्य पृथक्कृत्य । यज्ञं यज्ञसाधनं क्षीरं संभरेयुः ॥४॥ अदः अग्नये हविर्ग्रहणादौ see १.२. १०. ॥६॥ तद्ब्रह्मणाव एतन्मन्त्रपाठेन शाखायै पशूनां परिदानम् तदधीनत्वेन रक्षणार्थम् ॥८॥ दोहनार्थं तस्यां पवित्रं कुशद्वयात्मकं त्रिवृता बध्नीयात् ॥९॥ अमावास्यायां रात्रौ संनयतः क्षीरस्यान्यार्थत्वेन नियोगात् अग्निहोत्रस्य द्रव्यान्तरं विधत्ते । इन्द्रार्थस्य दुग्धस्यागन्यार्थत्वस्यायुक्तत्वात् ॥ दोहकालोपलक्षणार्थं जुह्वति समकालं तद्धोमे परिसमाप्तऽएव उक्ता सांनाय्यस्थाली अध्वर्युणा श्रपणप्रदेशे उपक्लृप्ता भवति तस्याः समानयनानन्तरं उपसृष्टां वत्सेन संगतां प्रस्नुतादिति दोग्धारं प्रत्यध्वर्युराह यदा उपसृष्टा तदा उपसृष्टेति दोग्धा ब्रूयात् स च शूद्रव्यतिरिक्तो भवेत् ॥१०॥ यज्ञे यथा घर्मं प्रवर्ग्यं प्रवृञ्ज्यात् एवं स्थाल्यधिश्रयणेन प्रवृणक्ति प्रवर्ग्यं कृतवान्भवति अतो यज्ञसंपादनम् । ह्वला नाशः ॥११॥ प्रागग्रं स्थाल्यां निदध्यात् । पवते गच्छति ॥१२॥ सांनाय्यस्य सोमात्मकत्वात्तत्पवनसाधनदशापवित्रवदस्याप्युदगग्रत्वं युक्तम् ॥१३॥ वाचा मन्त्रेण साध्यत्वाद्वागयज्ञः ॥१५॥ पयस आसेचनसमयेऽध्वर्युर्जपति ॥१६॥ अतः परं वाङ्नियमं विसृजेदथ काममिति ॥१७॥ दोहनपात्रक्षालनोदकस्य पुनः क्षीरे समर्पणमाह । उदन्ताकमुदकबिन्दुधाराम् पल्यङ्ग्य परितो गमयित्वा दोहपात्रऽउदकमासिच्य प्रक्षाल्य । पयसोऽवशिष्टं यदल्पमपि क्षतमभूत् तदपि इह भवेत् । क्षीरस्य कार्त्स्न्याय । उदकस्यापि क्षीरोपादानतामाह । तीव्रीकरणं सारवकरणम् । आतञ्चनद्रव्यं सूत्रकार आह

[काण्व° ३.४.२.११.] प्रागभुतशेषेणेति यवाग्वेत्यर्थः ॥१८॥ सोमस्य देवानामातिप्रियत्वात्कीर्निं तेनैव [°नैतद्द्रू° A.] द्रव्यं तेभ्यः स्वादु करोति ॥१९॥ नेत्वीरमुपरिभागे अवमृशेयुः ॥२०॥ ॥२१॥ १ ॥७॥

अवदानस्वरूपं विवक्षुराख्यायिकामाह । अणवे ऽननमेव निमित्तम् ॥१॥ संग्रहेणोक्तं विवृणोति ॥२॥ अनुब्रुवीत अनुवचनं कुर्यात् अधीयेत । अप्रीणां संबन्धी वेदाख्यो निधिः ॥३॥ वासयेत गृहान्नादिप्रदानेनेदानीमवकाशं प्रयच्छेत् ॥५॥ अवदयते दयतिर्दानार्थः । अवप्रत्यर्पणं देवानां स्वभूतमृणं विभज्य दत्तवान्भवति । यत्किं च चरुपुरोडाशादिकमग्नौ जुहोति तदवत्तं हविरवदानमिति प्रसिद्धं भवति ॥६॥ अनुवाक्यात्मकमिदं खलु प्रथमम् । एवं क्रमेण पुरोऽनुवाक्याद्याश्चतस्रो देवताः क्रमेण चत्वार्यवदानान्यनुप्राप्ताः हिशब्दश्चार्थे । कस्मै प्रयोजनाय पञ्चममवर्यंत्तदभिमानिन्याः पञ्चम्या देवताया अभावात् ॥७॥ अथ पुनश्चतुरवत्तमेव स्थापयति एतदिति । एतदेव कुरुपञ्चालदेशे प्रसिद्धम् अतस्तत्र प्रज्ञातवादनुष्ठानसंप्रदायानुरोधेन चतुरवत्तमेव कर्तव्यम् ॥८॥ अवदानस्येयत्तां विधत्ते । इवशब्दोऽनर्थको वाक्यालंकारे । यावन्मात्रमेव अङ्गुष्ठपर्वमात्रमेव । आधिक्यदोषमाह ॥९॥ इदानीं चतुरवदानप्रकारं दर्शयति । पुरोडाशांशौ द्वौ तदध उपरि चोपस्तृताभिघारिताज्याभ्यां चतुरवत्तवत् पुरोडाशस्योभयत आज्यकरणं प्रशंसति द्वे वा इति । सर्वाप्याहुतिः सोमाज्यभेदेन द्विविधा तत्र सोमस्य स्वरूपेणाहुतिवादाज्यापेक्षैव नास्ति अवशिष्टा हविर्विशेषमुपमावाज्याहुतिर्का भवितव्यौ ॥१०॥ अनुवाक्यायाज्ययोः क्रमेण देवताह्वानहविःप्रदानसाधनत्वं वक्ष्यते आह्वातव्यानां देवानां द्युलोकसंबन्धात्तयोः क्रमेण द्युभ्वात्मकता तयोः स्त्रीलिङ्गत्वाद्वन्द्वे वषट्कारस्य पुल्लिङ्गत्वात्सह मिथुनतास्ति ॥११॥ पुरोऽनुवाक्यादीनां द्युवात्मकताभिधानस्य प्रयोजनमाह । तयोः समनन्तरं वषट्कुर्यात् । वौषडित्युच्चारणकाले वा समनन्तरं वा प्रदानमस्तु सर्वथा वषट्कारात्प्राक् न जुहुयात् ॥१२॥ प्रदानस्य वषट्कारानन्तर्यं प्रकारान्तरेणोपपादयति तत्पात्रोद्धारपूर्वकप्रदानमिव भवति । उक्तविपरीतत्ये दोषमाह । भूमौ निदग्धं प्रास्तं इत्युक्तेनोपयोगाभावाद्दग्धम् । अमुया अनेन वषट्कारात्पूर्वकालहोमेन दग्धं स्यात् ॥१३॥ पुरोऽनुवाक्यायाज्ये गायत्रीत्रिष्टुभौ कर्तव्ये इति विधातुमाह । असौ द्युलोकः । अनुवाक्याया गायत्रीवे द्यावापृथिव्यावुभेऽअपि गोप्रितवान्भवति ॥१५॥ अमुष्या अधि द्युलोकस्योपरि । एते द्यावापृथिव्यौ । तस्मात्सायुज्यादिमे सहाभ्यवहरतः द्यावापृथिवीभ्यां स्वाहेति सह प्रदानात् अथवा वृष्ट्यन्नयोः परस्परसापेक्षत्वात्सह भोगः ॥१६॥ अनुवाक्याया उच्चारणधर्ममाह । अञ्जयन्निव वर्णानालोडयन्निव शनैः अञ्जतिर्गत्यर्थः ॥ कार्यमिदं चाह अनुवाक्यया यष्टव्यदेवामाह्वयति याज्यया हविःप्रदानसाधनम् ॥१७॥ पुरस्तात् मन्त्रस्य पुरोभागे लक्षणं यष्टव्यदेवनाम (°वानाम AC.) [य]स्यां सा पुरोऽनुवाक्या । अमुष्या अधस्ताल्लक्ष्माणीव अधोभागे तेषां परिभ्रमणात् ॥१८॥ उक्तं पुरस्ताडुपरिष्टाल्लक्ष्मैव विशिनष्टि । यस्या अनुवाक्यायाः प्रथमात्पदादर्ध्वः प्रत्नेन सोम गोर्भिरित्यादिलक्षणां यष्टव्यदेवतां ब्रूयात्सैव समृद्धानुवाक्या याज्या तु सा समृद्धा यस्या उत्तमात्पदादिऽवाह्वा अग्ने चक्षुष इत्यादिकादभिहितायाः देवताया उपरि वषट्करोति ॥२०॥ याज्यानन्तरभाविनं वषट्कारं विभज्य विधाय प्रशंसति । वौगित्युच्चारणं कुर्यात् वौगित्येतदौकारस्थाने आकारे कृते वागिति भवति । तस्मादेवं वौषडिति

वषट्कुर्यात् ॥२१॥ इत्थं दर्शपूर्णमासोभयसाधारणमवदानादिकं वषट्कारान्तं धर्ममभिधाय न (!) तत्प्रसङ्गाद्यवादिशब्दाभिधानद्वारेण दर्शपूर्णमासयागं प्रशंसति । द्वायं पैतृकं विततम् ॥२२॥ संवृञ्जीमहि अपहरेमहि । समवृञ्जत स्वाधीनं कृतवन्तः ॥२३॥ यौतीति यवः तस्य यवेति नाम । तेनापूर्यमाणपक्षेण समनुद्रयन् ॥२४॥ अयवनादमिश्रणाद्यवा शुक्लापक्षः । अहोरात्रमाससंवत्सराणामपि नाम दर्शयति । यवशब्दाभिधेयान् शुक्लकृष्णपक्षान्[य]तीति मासो यव्यः । सुदु एकः स्वेकः सर्वस्यापि कालस्य तत्रैवान्तर्भावात्संवत्सर एक एव कालः मकारोप[यु]क्तेन सुमेक इति परोक्षनाम संपन्नम् । प्रसङ्गाद्यवादिनामाभिधाय प्रकृतमुपसंहरति यवा चेति यवा अयवा च हि यवनोवायर्वत्येष (!?) भवति यवमस्योभयानुगतत्वात् अथवा देवैरेवायवात्मकस्य कृष्णपक्षस्यापि यवनात्पक्षद्वयमपि यवा । अत एतेषां यवादीनां मध्ये येन निमित्तेन ना (!) होता भवेत् तत्कार्यं याविहोत्रम् [°र्यां यावि° A.B.C.] । तैत्तिरीयकेऽपि ऋतव्या उपदधातीत्यत्र [५.४.२.] चयनप्रकरणे यवाद्यो व्याख्याताः ॥२६॥ २ ॥७॥

अथाग्नये स्विष्टकृद्यागं तस्य प्रधानयागसमानत्वं च विधातुमाख्यायिकामाह । पशुभिमानी देवो रुद्र इह यज्ञवास्तावुषित्वा [°स्तवषोषि° A.B.C.] द्युलोकाद्रौनोऽभूत् अत एव वास्तावेव स्थितत्वाद्रुद्रो वास्तव्य इति ब्रह्मविदः कथयन्ति ॥१॥ स्वयं यज्ञप्रदेशं (यज्ञाप्र° B. यज्ञं विप्र° A.) प्रत्युत्क्रमा (°त्युच्चक्राम?) स क्रुद्धो (?समजा B. सेमजो AC.) भूलोकस्यां दिशि स्विष्टकृत्काले यज्ञं प्रतिताऽभुवस्थो ॥३॥ अमुं यज्ञं विमृष्टं मा कार्षीः । यज्ञं समबृहत् ऊर्ध्वं प्रापयत् न च हविरादिकं बहिः क्षिप्तवान् तथा किमपि यज्ञाङ्गवानां न हिंसितवान् ॥४॥ तेषां सर्वेषामाहुतिर्ज्ञता ॥५॥ यावन्तः प्रदानशेषास्तेभ्यैकैकमवदानं कुरु ॥६॥ अवशिष्टभाक्त्वेन रुद्रस्य वास्तव्यप्रसिद्धिमाह ॥७॥ प्राच्यादिदेशभेदेन शर्वादिनामभेदेऽपि देवतैकैव ॥८॥ स्विष्टकृतऽइति विशेषणस्य कारणमाह । वयि अमुत्राहवनीयदेशे आहुत्याधारभूते सति ॥९॥ अथ स्विष्टकृन्निगदमभिदधाति (till to k. १५.) स होता स्विष्टकृदनुवाक्यानन्तरं ये अग्ने त्रीणि प्रयाजाज्यभागादिदेवा स्विष्टाः तान् तं स्विष्टकृतमग्निं च संपश्यति संस्मरेत् संभूयानुवदेत् संदर्शनप्रकारमनूद्य क्रमेण व्याचष्टे अयालग्निरित्यादिना (ल A.B.C.) अग्नं स्विष्टकृदग्निः प्रथमाज्यभागदेवस्य प्रियाणि धामानि निःशेषाण्ययाड् इष्टवान् तत्तन्नैतद्भागपाठेन प्रथमाज्यभागं स्विष्टं कृतवानित्युक्तवान्भवति । एष स्विष्टकृन्निगदः आवाहननिगदेनैव व्याख्यातप्रायः see ४.२.१६. ॥१०॥ एतेन यक्षद्ग्नेरिति भागेन भूयसीं प्रीतिमुत्पादयन् । सर्वशोऽपि संतुष्टत्वाय स्विष्टकृत्त्वकारणस्य प्रकाशनादेवं संपश्येत् ॥११॥ देवतां देवतानाम पूर्वमयाड्कारात्प्राक् । तादृशं स्विष्टीकारणस्यैवानभ्यर्हितत्वेन (°त्वात° BC.) प्रथमं निर्देष्टव्यत्वात् ॥१२॥ यजत्यनेन । स्विष्टकृत इदानीमपि अकृतत्वाद्याडिति नोच्यते । यथा आवाहिता देवताः सर्वा अयोष्ट एवं स्वं महिमार्थमपि यष्टव्यं । यत इतः प्राक् किं चन स्वाय महिम्नऽइदं हविरिति न क्रियते तस्मादत्र स्विष्टकृन्निगदाभिधानसमये तत्रेन स्वं महिमानमित्यनेन तं प्रीणितवान्भवति ॥१३॥ रुद्रशब्देनाग्निरुच्यते तदुपप्रीतित्वात्प्रज्ञा अपीयः । एड्याः पुनः पुनरिड्याः (?इष्ट्या B. यष्टा CA.) । यायजूकाः इज्याशीलाः ॥१४॥ जातवेदा आहुत्याधारः स्विष्टकृदग्निः हविः सौविष्टकृतं सेवताम् ॥१५॥ इत्थं स्वि-

च्छन्दिमिदं व्याख्याय तस्य याज्यां पुरोऽनुवाक्यां चाह । अत्रस्तने अत्यन्तं योग्यं । अयं स्विष्टकृद्यागः तृतीयसवनस्थानीयः अन्तिमत्वसाम्यात् ॥१६॥ स्विष्टकृतो हुतावशिष्टत्वप्रत्वादे-तदस्य वास्तुस्थानीयं । प्रजापतेः बलवद्याः उग्रावासभ्यः सकाशादिन्द्रेण सहोत्पन्नवाशिष्ट-मिन्द्रियम् ॥१७॥ पेसुकमभिवर्धनशीलम् पिस्यति अतिवृद्धो भवति ॥१८॥ पतन्नेकं आज्ञं भूमौ प्रसारितवान् स आज्ञविलिस्तोऽभूत् । अपत् प्राप्तमभूत् । सच्छन्दसौ समानच्छन्दस्के ॥१९॥ स्विष्टकृदवदानहोमप्रदेशयोर्विशेषमाह । उत्तरादिशो (°त्पूर्वदिशो ABC.) लोकपाल-त्वेन रुद्रसंबन्धः सर्वशास्त्रप्रसिद्धः ॥२०॥ उत्तरदेशे प्रदानेऽपि प्रधानहविषा सहासंस्पर्शं वि-धत्ते । प्रधानाहुतिभ्यः सकाशादभ्यर्धे संनिहितप्रदेशऽएव न तासां स्थाने । विपत्ते बाध-माह इतरा इति । इतराः पशुफलजनकाः । यदि ताभिः सह स्विष्टकृदाहुतिमासञ्जयेत् त-दा रुद्रेण सह पशून्योजयेत् अत यजमानस्य गृहावस्थिताः पशवः समीपऽएव म्रियमाणाः प्राप्नुयुः ॥२१॥ आहवनीयगार्हपत्ययोरन्यतरस्मिन्हविःश्रपणं विधास्यति तदर्थं तयोराधान-प्रदेशपरिमाणं विधातुमाह । यस्त्विह भूमावेवावशिष्टः स गार्हपत्यः तस्मादिदानीमपि दिवं गन्तुकामा एतमाहवनीयं यज्ञसाधनं गार्हपत्यात्प्राग्देशे यजमानायोजयेयुः ॥२२॥ विक्रम्यते ऽनेनेति एकपादप्रक्षेपपरिमितः अंशो विक्रमः । गार्हपत्यमवधीकृत्य ॥२३॥ गार्हपत्ये अप-येयुरिति यस्तोऽपसखलः अपस्खलनाम च हविषां भवति । फलितानां व्रीह्यादीनां तुषवि-मोकादिसंपादनप्रदेशः खलः यथा व्रीह्यादिराशिः खलादबहिरपि प्राप्तो व्यर्थो भवति ए-वमन्यत्रश्रपणमपि ॥२६॥ अन्येषां पक्षमाह । यस्मादेष आहवनीयः आहवनार्हः अथ एष पक्वस्य हविषो होमाय योग्यो न आमस्य पाकाय ॥२७॥ अग्नेः परिस्तरणं विधातुमाह । ए-वकारेण स्वतर्पणादपि ब्राह्मणतर्पणमेव श्रेय इत्ययमर्थो द्योत्यते । यजमानो ब्रूयात् ॥२८॥ ३ ॥७॥

The commentary of *Harisvâmin*, the extracts out of which are now beginning, is much shorter, than that of *Sâyaṇa*, and leaves the greater part of the text unexplained. प्राशित्रावदानविध्यर्थमाख्यायिकामाह । प्रजापतिः प्राणपिण्डलोककालयज्ञात्मा । अभिध्यातवान् लोकात्मना दिवं कालात्मना उषसं प्राणपिण्डात्मना अन्त्येभ्यो मृगो रोहितं (?) रोहिणीनाम नक्षत्रं यज्ञात्मना वाचम् । मिथुनी मिथुनवान् ॥१॥ दुहिता न गमव्येति संधां संधानं मर्यादामतीत्य । व्याध ताडने ताडयेषुणा । इकब्दोऽवधारणार्थः नू-नंशब्दो यस्मादर्थे यस्मान्नथैव तदास ॥३॥ क्षमया क्षमायां (क्षमयां ABC.) पृथिव्याम् । त-दाग्निमारुतं नाम शस्त्रं तस्मिन् तदभिरुयाख्यायते see ऋक्संहि° ८.१.२७.२. ॥४॥ यदिदामि-षोरनीकं यज्ञसाविलिप्तं तद्यथा न वृथा स्याद्यथा च प्रधानाहुतेः न महत्स्यात्तथा उपायं जानीत ॥५॥ प्रसन्नः एव ब्राह्मणाक्षेपः किं चित्तु वक्ष्यामः ॥ नो इति प्रतिषेधः नु इति वा-क्यपूरणः । दतः दन्तान् ॥७॥ ततो बृहस्पतिप्राशनादर्वाक् ॥८॥ संमादन्त्वभावाद्यदत्र किं-चिदशातं तन्निर्मिमीते बहिः करोति निष्कर्षति । पशुत्वमिडायाः प्रसिद्धं पशवश्च रुद्रादुत्त-णीया अतो हृद्रिये प्राशित्रे दक्षेऽप उपस्पृश्येडावदेया ॥९॥ स्रदत् (°दन् C. °दप B. °दच A.) स्रद स्थैर्ये हिंसायां च [धातु° ३.१३.] अल्पतरत्वादस्थिरमगाढबलं निःसारणावद्भवति इ-तरथा तु चतुर्गृहीतं महत्त्वाद्गाढं स्यात् ॥१०॥ तिर्यक् प्रजहीत (!) ओहाङ् गतौ [धा° २५.

७.] प्रगाह्येत्प्राशित्रम् ॥१२॥ तत्प्रतिगृह्णातीत्यत आरभ्य ब्रह्मवं प्राह (प्राय AC. प्राशिय B.) आध्यायसमाप्तेः ॥१३॥ अथ परिजाल्य पात्रं नाभिमालभतऽइति शाखान्तरात् इति शेषः ॥१७॥ अथास्मै ब्रह्मभागमित्याध्वर्यवम् । प्रतिविद्वानः जानन् एष मे भाग इत्याशयः ॥१८॥ आ ए- तस्मादध्वर्युवचनात् । पाकयज्ञार्हया इडया पाकयज्ञेषु हुतशेषो भक्ष्यते तेन पाकयज्ञाईत्युच्य- ते । ब्रह्मा हि प्रायश्चित्तैर्यज्ञं भिषज्यति ॥१९॥ अनुयाजप्रसवविधिः । यस्मात्त्वमेतेऽध्वर्यवो यज्ञं प्राजर्बृहस्पतये च न मह्यं मनुष्याय तेन कारणेन त्वमनुज्ञया यज्ञादीनवपालय ॥२१॥ सूतिर्गतौ ॥२२॥ ४ ॥७॥

इडाब्राह्मणमेतत् तत्रेडाया मानवीमिडा देवता त्वकुं मानवी घृतपदी मैत्रावरुणीत्ये- तानि च निगदपदानि व्याख्यातुमितिहासः प्रवृत्तः । स चेतिहासः प्रसन्न एव किंचित्तु दर्शयामः । अवनेज्यते हस्ताद्यनेनेति अवनेग्यं कारणे कृत्यः । परिचारकाः आनीतवन्तः । भाविनोऽर्थस्य सिद्ध्यर्थं देवतैव मत्स्यरूपेणाजगाम ॥१॥ पाल रक्षणे । वहतीत्योघः उदक- संघातः स इमा भरतवर्षनिवासिनीः प्रजा निःशेषं वोढा देशान्तरं प्रापयिता ॥२॥ क्षुल्लकाः क्षुद्रकाः अल्पकाः । गॄ निगरणे निगरति । बिभरासि बिभ्रियाः पुष्णियाः । अतिवर्धे अति- रिच्य वर्धितास्मि । कर्षूः खातिका ॥३॥ शश्वच्छब्दोऽत्र सामर्थ्यात्क्षिप्रवचनः झषो महाम- त्स्यः । ज्येष्ठं वृद्धतमम् । इतिथीमित्यभिनयः तेन संख्येयाः समादर्शितवान् इयतीनां दशा- नां द्वादशानां वा पूरणीतिथी इयतिथीं यावतिथीं तावतिथीमिति प्राप्ते छान्दसो यशब्दावश- ब्दलोपः । समा संवत्सराः मामुपासासे उपासीथाः ॥४॥ नावमुपकल्प्य मत्स्यमुपासितवान् ओघे चोत्थिते नावमधिरूढः । शृङ्गे भवितव्यतयैव निष्पादितं । उत्तरं गिरिं हिमवन्तम् ॥५॥ समवायात् एकीभावाय अधः गच्छेत् अवतरेत् ॥६॥ पिब्दमाना पिबद् [°वधृ AC.] क्षरणे घृतप्रभवत्वात् घृतं स्रवन्ती सुस्निग्धा उदकादुत्थिता ॥७॥ आवयोर्दुहितेति ब्रूष्वेत्यूचतुः । अपिवं भागः तं प्रार्थितवन्तौ । तत्र भागिवं वा असौ वाशब्दः शब्दार्थे जानातिश्च प्रतिपूर्वो द्रष्टव्यः प्रतिज्ञातवती च न च प्रतिज्ञातवतीति यावता मैत्रावरुणीति व्यपदिश्यते तावत्प्रतिज्ञातवती यत्र तस्याः किंचित्ताभ्यां श्रूयेतेत्येवं न प्रतिज्ञातवती ॥८॥ अजीजनथाः जनितवानसि । म- या हेतुभूतया मय्युपह्वयमानायामुपह्वतो यजमान इत्येतेन होतृवचनेन यामाशिषमाशासि- ष्यसे ॥९॥ उपस्तरणादिविशेषः शाखान्तरात् पशुप्रभवघृतादिप्रभवत्वात्पशव इडा ॥१२॥ इ- हेत्यभिनयेन प्रदेशिनीपर्व मध्यमं दर्शयति । शाखान्तरात् ॥१४॥ हेवन्तं शाखान्तरादेव ओष्ठ- योरित्यत्राविशेषेण निलिम्पेदिति श्रुतम् शाखान्तरे वधरमधरऽउत्तरमुत्तरे । किं पुनर्निलिम्पते दूरत्वात्संनिधानाददनीयत्वाच्च आस्यम् तत्रास्ये तदेवैनां प्रापयतऽइति इडानिष्क्रयवचनादे- डमेवास्यमिति गम्यते ॥१५॥ निलेपार्थवादोऽयम् तनिष्ठं तनुतमम् पाकयज्ञा मनुष्यप्रधा- नत्वान्मन्दतरवीर्या । इह तनिष्ठे देशे । एतामिडामेतयदोष्ठयोर्निलिम्पते तत्पुरा रक्षोभ्यो या- वदेवार्थेऽप्युपह्वानं ध्रुवा नागच्छति रक्षांसि तावत्प्रापयने प्राणेष्वेव हूयतऽइति वक्ष्यते तं प्रा- णदेशं प्रापितवान् ॥१६॥ अथान्तरेडावदानमेतत् ॥१७॥ अत ऊर्ध्वं होत्रमिडोपह्वानं विधीय- ते । तदपि द्विविधमुपांशु चोच्चैश्च तत्र प्रथमं तावदुपांशूपह्वानं युज्यते । उपपूर्वो ह्वयति- रप्यनुज्ञायां वर्तते । इयमिडा सर्वैर्ऋत्विग्यजमानैर्विभज्य भक्षणीया तत्र कोऽनतिरिक्तं (नाति- रिक्तां B.) शङ्कानिवृत्तये परस्परमनुज्ञातव्यम् तद्वै तत्साधारणमेवानुज्ञानं मध्यावस्थानीयो (म-

ध्यच° BC. मध्यक A.) होता सर्वैरन्वारब्धः करोति ॥१८॥ इडाया एवैतानि रथन्तरादीनि पृथिव्यादीनि च रूपाणि ततश्च तस्यामुपहूतायां तान्युपहूतानि भवन्ति तेषु चोपहूतेषु सा उपहूता भवति देवतानामननुज्ञातां मनुष्या भक्षयितुं नार्हन्ति अतः सानुज्ञाप्यते । मामित्येतच्च तुल्यहेतुत्वात्सर्वेषामृत्विग्यजमानानां प्रदर्शनार्थम् ॥१९॥ अथोपांशूपह्वयत इति यदुक्तं (k. १८.) तस्य विच्छेदार्थमथ प्रतिपद्यत इत्याह तेनेत ऊर्ध्वं यथाप्राप्तमुच्चैर्वक्तव्यम् ॥२४॥ वत्सा वै दैव्या अध्वर्यव इति नानाय्यं हविः संभवत्यध्वर्युवदित्यभिप्रायः ॥२७॥ सामान्यरूपेण यजमान इति वाच्यं न विशेषरूपेण देवदत्तो यज्ञदत्त इति ॥२९॥ यो मनोरथो यजमानस्य तस्मिन्नयमनुज्ञातः समृध्यताम् ॥३०॥ चशब्दः समुच्चयार्थः । अन्यं तु प्रत्यक्षमेव प्राशिष्यन्ति । अस्मात्तोधारापि ग्रहणं पञ्चनाम्न्या संपन्ना ॥३१॥ यत्र काले होता प्रतिपद्यते इडोपहूतेत्येतं निगदं तदा चतुर्धा कृत्वा पुरोडाशमाग्नेयं शाखान्तरात् बर्हिषि सादयति ॥४०॥ यत्र काले आशिषमुपहूतां यजमान इति होता आशास्ते तदा यजमानो जपति ॥४२॥ पवित्रयोः पवित्राभ्यामिति विभक्तिव्यत्ययः पवित्रपूतास्तनवामह इति वाक्यशेषात् मार्ष्टि आत्मानं शोधयन्ति ॥४३॥ अपिमृजाति संमृजाति ॥४४॥ १ ॥८॥

अनुयाजब्राह्मणमेतत् अथाग्निं कल्पयतीत्यस्मिन्क्रमे (see ३.३.१२.) उल्मुके द्वे ऊर्ध्वं नयन्त्यग्नितः पृथक्कर्तृत्वेऽप्यृत्विग्यजमानाः साक्षादध्वर्युरितरे तदनुज्ञानेन । यातयामो गतरसो गतवीर्यः एतन् एतस्मिन्ननुयाजकाले अग्निर्भवति देवेभ्यो यज्ञमूढ्वाऽभवति ततश्च गतवीर्यत्वादनुयाजग्रहणम् स्यादाभ्यां तु प्राग्नीताभ्यां पुनः संसृष्टाभ्यामगतवीर्यो भविष्यति ॥१॥ अनु यागे नीते पश्चात्सगमयन्ति ॥२॥ उल्मुकसमासेन पुनर्नवीकृतोऽग्निः समिधा सामिधेनीस्थानीयया चैषा त इत्यन्ययर्चा समिध्यते ॥३॥ see ४.४.१५. ससृवान् ससृवांसनिति प्राप्ते तकारलोपः ॥५॥ उत्तरस्यां कण्डिकायां बर्हिषो जगतीत्वं वक्ष्यते अन्यां तु जगत्या अनुयाजेषु प्राथम्यकारणमाह । तद्वै तत्र सामिधेनीषु स्थानविपर्यासं मन्यन्ते विद्वांसः यज्ञागत्यां परिमाणतो ज्येष्ठायामेव तिष्ठमानायामल्पाक्षरा गायत्री प्रथम युज्यते तद्यथायथं कर्तुमिहानुयाजेषु देवा जगतीं प्रथमामकल्पयन् सा च जगती बर्हिः । पापं ज्येष्ठापत्यया कनिष्ठं नेत्पापमेव सत् वस्यः प्रशस्यतरं यज्ञेनेदमसत् तदनुकाराच्च प्रजास्वपि यत्पापं त्रिजन्मन्धुकर्मादिना तद्वस्यः वसुतरं प्रशस्यतरमितास्माद्पापान्मा भूत् ॥१०॥ येयं बर्हिराख्या देवतात्रेज्यते एषा अयं लोकः परिवृढो हि सः ॥११॥ नरः प्रजाः शंसन्ति वदन्त्यस्मिन्नित्यन्तरिक्षं नराशंसः । अन्तरिक्षमु वै त्रिष्टुप् मध्यमत्वादेकादशभागत्वाच्च दश दिश आत्मनैकादश तत्संबन्धाद्वा ॥१२॥ बर्हिरादिषु यष्टव्येषु बर्हिर्यजेत्यादिना होतापि सर्वत्र देवं देवमित्याह न बर्हिराद्येव केवलम् । यस्माच्छन्दोदेवत्या अनुयाजाश्छन्दांसि च देवानां देवाः तस्माद्देवान्यजेत्येवाध्वर्युराह गृहभोगाः पशुमन्त (°मत ABC.) एवेति गृहाः पशवः ॥१४॥ सर्वत्रैव यागे देवताया एव होत्रा वषट्क्रियते अध्वर्युणा च ह्यते अत्र तु अनुयाजेषु न प्राधान्या देवतास्ति बर्हिर्नराशंसयोर्देवतात्वेनाप्रसिद्धेरग्नेश्च गायत्रीप्रधानत्वात् तेन वसुवने वसुधेयस्येति शब्दाभ्यामग्निमिन्द्रं चोपादाय ताभ्यां बर्हिरादीनुपलक्ष्य इन्द्राग्न्यात्मकेभ्यो बर्हिरादिभ्यो वषट्करोति होताध्वर्युश्च तदात्मकेभ्यो जुहोति । वसु हविर्लक्षणं भजति वसुवनिः । वसूनि हवींषि धीयन्तेऽस्मिन्निति वसुधेयः ॥१५॥ वसुवने इत्यामन्त्रितान्तं [against the ac-

cent] वसुधेयस्येति षष्ठ्यन्तं ते कथं अहिर्बुध्निवेति प्रथमान्तेन अहिरादिना संबध्येते । नैष दोषः । एवमु हैतदिति ध्रुवं देऽग्रथ्येते विभक्ती व्यत्ययेन चतुर्थ्यर्थवृत्ते दर्शयति । तस्यापि यास्काचार्येण [यस्का° ACB.] वसुवननाय च वसुधानाय चेति [निरुक्त° १.४२.४३.] तादर्थ्ये चतुर्थ्या एकवाक्यता दर्शिता ॥१६॥१७॥ २ ॥८॥

ऊह वितर्के प्रेरणे वत्र द्रष्टव्यः अन्योन्यविपरीतं नामयति ॥१॥ यस्मादेतत्समाने अभिन्ने व्यूहनकर्मणि विलक्षणमाक्रियतेऽभिव्यज्यते भोक्तृत्वं भोग्यत्वं च तस्माद्यज्ञानुकारेण भूतेऽपि समानादभिन्नात्पुरुषात् भोक्ता पतिः भोग्यश्च भार्या जायेते यथा समाने कर्मणि शुक्लपभृतौ । तथा च ननु (च न AC. च ननु च B.) समानजातीययोर्विवाह एव नास्ति कुतो भोक्तृभोग्यभावः (°ग्ये भागः B.) पशुन्यायेन प्रवृत्तेत (°न प्रवृत्ता व° A. °न कश्चिद्वा वर्तते C.) न स यज्ञानुकारः स्यात्किं तर्हि यजमानैकतानुकारः स्यात् सत्यम् एवं व्यवहारस्य यज्ञमूलत्वादन्याय्यस्यापि तमेव व्यवहारं दर्शयति । इदं हि अधुनापि ज्ञात्याः [समा]नजातीयाः दीव्यमाना रममाणाः परितुष्टान्तःकरणाः नाकार्यकारिण-इवापरिभूताः (-इव प° C. -इव प° A.) आसते । कथं दीव्यमानाः । विदेवम् । दिवेर्व्यवहा[रा]र्थस्य अन्योऽन्यं भोक्तारो भोग्यैः सह भोग्या भोक्तृभिः सह दीव्यामहे व्यवहृत्य [व्य]वहृत्य । व्यवहर्तॄणामभिप्रायेण व्यवहारं दर्शयति इदं प्रत्यक्षमेव विवाहेन वयं संगच्छामहे एकस्मादेव पुरुषान्मूलभूतादुत्पन्न पुनरेकपुरुषारम्भेण समानापत्यारम्भेण च संयुज्यामहे इति भर्तॄणां योषितां चाभिप्रायवचनम् । एवं व्यवहारं दीव्यमाना आसतेऽथ के (तमेके B. तेत्यात्क A. तैत्क C.) पुनः संगच्छामहऽइत्याह किमनन्तरऽएव पुरुषे नेत्याह चतुर्थे तृतीये वा वाशब्दोऽत्र लुप्तनिर्दिष्टो द्रष्टव्यः चतुर्थे वा तृतीये वा । तथा च काण्वानां तृतीये पुरुषे संगच्छामहऽइति श्रूयते चतुर्थे संगच्छामहऽइति सौराष्ट्राणां व्यवहारः तृतीये संगच्छामहऽइति दाक्षिणात्यानां ते हि मातुलदुहितृषु (°हितुः त्रिषु ABC.) पितृष्वसृपुत्रेषु संगच्छन्ते ते च मूलपुरुषाद्गण्यमानास्तृतीया भवन्ति ॥ एतस्मादेव स्रुग्व्यूहनात्कारणात्तथा भवति ॥५॥ शुक्लगर्तेनाद्येन संश्लेषयति । परिधयोऽपि स्वयं देवास्तेऽपि देवपात्रेण देवाभमर्दभि पलायित्वा तु न समग्रम् ॥७॥ वयि पार्थिवान्यात्मके तृप्ते पार्थिवा वसवस्तृप्यन्ते वस्त्वर्थं वामनाम्नि ॥८॥ अभिपद्याभिगम्य हस्तेनालभ्य ॥१॥ स्वगा अव्ययमेतत्स्वस्थानगामिवचनं स्वस्थानगामिनं करोति । अगन् अगमत् गतः अपिनयति संनयति ॥११॥ व्यन्तु खादन्तु इमं प्रस्तरं देवाः येभ्यो होष्यते कीदृशम् वयः पक्षिभूतम् Here is the conclusion of B. ॥१४॥ यथा पृथिवी मूल्यमूलान्नसंस्पृष्टा पृश्निस्तद्योगाच्च वशा वश्या काम्या ॥१५॥ तं प्रकृतं प्रस्तरं प्रागग्रं सूक्तवाकं उक्ते पश्चात्सभग्रमेव प्रक्षिपति । युप रुप लुप विमोहने [धा° २६.१२४.] मूर्छयेयुः । अपो गतौ नयनेऽत्र द्रष्टव्यः विस्तारयामि (विस्मा° A.C.) सुदाधनाय ॥१८॥ संवदस्वेत्यादीनां व्याहृतीनां आख्यस्तावदर्थः । अग्नीदध्वर्युं प्रेष्यति संवदस्व वं मया सह शम्युवाकप्रैषार्थमिति । तमध्वर्युः पृच्छति किमगमत्प्रस्तरशरीरो यजमानः स्वर्गलोकम् किं दग्धः प्रस्तर इत्यर्थः । अग्नीदगन्निति प्रतिवचनमाह गतो यजमानो दग्धः प्रस्तर इत्यर्थः । अध्वर्युस्त्वाह यद्येवं ततः शम्युवाकपरि[धि]प्रहरणयोः कालो वर्तते तत्स्राश्रावय होतारमाकर्णय । अग्नीध्राह श्रौषट् (°हा वौ AC.) मृणोत्येतावयमपिवाहितो (अणोत्यो A. मणोत्यो C.) श्रुणि

तं यद्दिवाक्षितमिति । स्वगा दैव्या होतृभ्य इति शम्युवाकप्रैषः हे होतः शम्योर्ब्रूहि अस्य अर्थेरार्षं ब्रूहि स्वगा स्वस्थानगामिभ्यो (°मिर्वा AC.) दैव्या देवेभ्यो होतृभ्यः परिधिशरीरेभ्यो क्षयताम् मानुषेभ्यस्तु होतृभ्यः स्वस्तिरविनाशोऽस्त्वित्येवंरूपं वा ब्रूहीति ॥ श्रुतिस्तु सांकेतिकं स्फुटतरमर्थं व्याचष्टे तत्र च यथैव प्रहरणसंबन्धसूक्तवाकप्रैषसंबन्धमाश्रावणमनुषङ्गतः परिधीनामुपकारकमित्युक्तम् तथैवापि परिधिप्रहरणसंबन्धशम्युवाकप्रैषमंत्रस्य व्याहृतयोऽनुषङ्गात्प्रस्तरवृत्तान्तं प्रकाशयतीति (°यतीति AC.) दर्शयति संवादयेनं देवा इति प्रियमिवातिथिमागतैर्देवैः संभाषय ॥२०॥ बहूनां मानुषाणां होतॄणामभावादेकवचनम्स्थानःएत्रे-तद्बहुवचनम् ॥२१॥ संप्रगृह्णाति संगते उद्गृह्णाति संस्रवहोमाय आज्यशेषस्य स्वगाकाराय च ॥२२॥ अपिविन्यो भागिन्योऽत्र वयमपीत्येवं मन्यन्ते ॥२३॥ स यन्निधायावद्येदिति प्रसङ्गनार्थप्राप्तं चरकश्रुतिप्राप्तं च निधायावदानं प्रतिषेधति वाहनमश्वादि यथा तदवार्कत् अधः पतेत् एवं निधानं स्रुचोः प्राग्विमोकात् अधश्चलनं तत्कार्यस्य स्यात् । विमुच्यतेऽस्मिन्निति विमोचनं स्थानम् ते तत्र सादयत्यध्वर्युः विश्रमार्थं विमुञ्चति । गतिमध्वानम् ॥२७॥ ३ ॥८॥

आध्वर्यवः सूक्तवाकप्रैषः शम्युवाकप्रैषश्चाधस्तादुक्तस्तत्प्रसङ्गात्सूक्तवाकशम्युवाकयोरिदं ब्राह्मणम् तत्रापि सूक्तवाकस्य प्रयोजनं विवक्षुः कालसंबन्धगतमुपादाय (!) प्रयोजनमाह । यस्मिन्काले अध्वर्युराहैषिता इत्यादि (see ८. ३. १०.) अतस्तत इति सर्वनामव्यत्ययो द्रष्टव्यः तत ऊर्ध्वं होता यदाह इदं द्यावापृथिवी इत्यादि (k. ४.) तत्सूक्तान्याहेति सूक्तवाकशब्दनिर्वचनम् ॥१॥ वशब्दः समुच्चये । देवान्प्रीत्वा तर्पयित्वा शास्त्रपरिपन्थीव संतप्रश्ने (!) संदद्या (!) तेषु देवेषु तेषां मध्ये अपिवी भागी भवति । अप्रेषोत्तर्पितवान् ॥३॥ प्रतिपद्यते होता वक्तुमारभते । आर्ष्म ऋजवसः । नमोवाकमन्नदानवचनम् । यं सूक्तानां वक्ष्यामि नाहं मानुष इति वदित्वा मामधिष्ठातुमर्हसि । उपशृणोतीत्युपश्रुतिः ततः सप्तमी द्विवचनमुपश्रुत्योरिति प्राप्तं ततश्छान्दसः पूर्वसवर्णः । अवति तर्पयति इत्यागा ॥४॥ शंगवी शं च ते गावौ च शंगव्याविति प्राप्ते पूर्वसवर्णः । जीवनस्य दात्र्यौ । अत्रमनशीले ते देवते उपासीनो न त्रस्यतीति देवधर्मं यजमाने दर्शयति नाहेति । नास्ति प्रच्छदनं प्रलाभः एतयोः दुर्लभे ॥५॥ गावः अवन्ति तृप्यन्त्यस्यामिति गव्यूतिः गोप्रचारः सा च क्षेमऽउर्वी भवति । व्याघ्रादिभयं त्रसन्ति न दूरं ग्रामाद्गावो गच्छन्तीत्यनुर्वी गव्यूतिर्भवति तेन गवां क्षेमहेतू स्तामित्यर्थः । वृष्टेर्दात्र्यौ ददातेर्वनिप् यकारस्यागमः वृष्टिदातारौ । होतिन्तृप्तिस्तामापतऽइति होत्याया सुखुप्रवर्त्यौ ॥६॥ ऊर्जः मतुपि असुगागमः वकारस्य च भत्वम् ॥७॥ आविदनमाप्नित् ॥८॥ महो महनं पूजा विभूतिः ॥११॥ see ८. १. २१. ॥१२॥ अमुत्र see ८. १. ३० ॥१३॥ अमुत्र see ८. १. ३३. ॥१४॥ सजाता भ्रातरः आत्मिकास्तु प्राणाः तेषां च तस्य संभक्तिस्तैरवियोगः सजातवनस्या वना[न]शब्दः काण्वादिषु द्रष्टव्यः काण्वादिभ्यो यक [पा° ३. १. २७.] वननं वनस्या ॥१५॥ अश्यात् अशू व्याप्तौ प्राप्नोतु ॥१६॥ तिस्र इडायाम् see ८. १. ३०. ३३. ३७. ॥१७॥ शास्त्रान्तराधीतानां प्रतिषेधः ॥१८॥ रासताम् रासृ (!) दाने । वनु याचने याचताम् वयं च मानुषा होतारः आत्मनि बहुवचनम् अधिशब्दोऽग्नेरित्यस्य पञ्चम्यन्तद्योतनार्थं अनेकपञ्चम्यर्थसंभावेऽपादानार्थद्योतकः [पा° २. ३. २८.] ॥१९॥ अञ्जसा ऋजु सम्यक् । तत्तदा तद्विज्ञानं भवितव्यतावशादेव अन्तर्हितं विच्छिन्नं मनुष्येभ्यो बभूव ॥२४॥ संस्थानं श-

म्युना दृष्टं प्रार्थयामहे ॥२६॥ अनया दक्षिणस्य पाणेः कनिष्ठिकया इति एवम् इत्यभिनयेन पृथिव्या उपदर्शनं दर्शयति । अथ कनिष्ठिकया पृथिवीमुपस्पृशतीति काण्वश्रुत्युपरोधः (!)। अग्निर्देवो दैव्यो होतेति [५.१.५.] व्रियमाणोऽग्निर्भवं चित्तेनापगतः स पृथिवीस्पर्शनेनाभिनयेन मानुषायतनं पृथिवीमुपगतोऽस्ति ॥ एवं प्रासङ्गिकं होतृब्राह्मणं समाप्तम् ॥२१॥१॥१॥

पत्नीसंयाजब्राह्मणमेतत् ॥ देवानां पत्नीः देवैः सह संगता याजयिष्यन्तः । आहवनीयात्पराञ्चस्तमभिमुखमायन्ति ॥१॥ गार्हपत्यमुत्तरेणातीत्य पत्नीं चापरेण पत्नीदक्षिणपार्श्वे स्थितौ यजेदिति (यजा° A. C.) अपरे शाखिन आहुः । भसदुत्सर्गायतनं यथा भसदि शिरः संयाजेनाथायुक्तमित्यभिप्रायः ॥३॥ चरणशब्दे सर्वं हौत्राध्वर्यवमभ्याख्यम् । तिरोऽवहितमप्रकाशं मिथुनेन लिङ्गद्वयेन चर्यते लोके ॥८॥ आहवनीयात्साम्य एवैतच्छिरः करोति अन्तर्धानेनादर्शनमिच्छन्ति । पुंसः अन्तर्हिता पुंसश्चादृश्यमाना (पुंसश्च दृश्यमाना C.) जिघत्सन्ति भक्षयितुमिच्छन्ति तस्माद्यज्ञाङ्गानुकारात् क्षुद्रयोषितस्तु पुंसः समक्षमप्यन्ने अश्नन्ति ॥१२॥ परिधिप्रस्तरसंबन्धौ सूक्तवाकशम्युवाकौ तदभावेऽनुपपन्नौ । इयमशब्दोऽवसानवचनः कण्वादिषु पठ्यते अवसानमवसादं पत्न्याः कुर्यात् त्वयं प्रतिनिधिः ॥१४॥ प्रैषसामर्थ्यान्न सूक्तवाकमाह ॥१८॥ अशीनमः भीततमः । आत्मनि अग्नौ दक्षिणाग्निहोमादि शाखान्तरात् ॥२०॥ बर्हिराज्यति यजादतिरिक्तं जुहोति । समिष्टयजुर्हि देवताविसर्जनार्थम् ॥२०॥ अध्वर्युरुत्तरपार्श्वाद्दक्षिणपार्श्वे वेदेर्गत्वा स्वदेशेऽवस्थिता एव प्रणीता नोच्चैर्नयति भूमौ पर्यस्यति । प्रक्षिणीयात् हिंस्यात् ॥२२॥ फलीक्रियन्ते तण्डुला एभिरिति फलीकरणाः ॥३३॥ संत्रुट्य समाप्तिपूर्वं संस्तुत्य । निरभजन् बहिर्यज्ञात्कृतवन्तः । अन्ना लोहितेन । भागिनं स्वल्पभागेनापि भक्तम् । अभागं भागमदत्त्वा यं निर्भजन्ति स आशंसत एव । अबलो हि बलवतो वशं भवति लब्ध्वा आसाद्य कृतश्चित्कालपर्यायात् किं त्वं मां बभक्थ मनसि किं मह्यं त्वया दत्तम् । तेदनी (तेभनी A C.) लोहितम् ॥२५॥२॥१॥

याजमानकर्माभिधायि ब्राह्मणमेतत् । अध्वर्युर्निनयति । दधातेः समृद्धार्थस्य दक्षिणा रूपम् यज्ञसमृद्ध्यर्थं यज्ञमनु विलग्ना दक्षिणेति । दक्षिणामन्वारभ्य सा हि परिक्रयार्थं ऋत्विग्निष्पादिता परिक्रीयते यथान्यत्रापि परिक्रयसंबन्धः परिक्रीता एवमत्रापि ॥१॥ यः अकृतकृत्यः तमापतः यस्तु कृतनियतकर्मा तमतिसृजतः ॥२॥ यद्वै यज्ञस्य मिथ्या क्रियते अकरणमन्यथाकरणं च ॥४॥ अध्वर्योर्निनयने व्यापृतत्वान्मन्त्रस्याशीर्लिङ्गत्वाद्यजमानः प्रतिगृह्णाति ॥६॥ सर्वमिवातः परं यजमानम् ॥७॥ तद्वै तत्र इत एव लोकात्पराचीनमूर्ध्वमभिलिखं दिधमित्यर्थं बहुतमाः क्रन्ते ॥९॥ आदित्यस्य ये रश्मयः कदम्बकेसरवदनन्तभेदास्ते सुकृतो ये पूर्वं यजमानाः तेजःशरीराः उपचितानीमित्र तद्यजत्रूपो प्रजापतिः । स्वर्गो वा लोकः अज्ञानानां कर्मकर्तॄणाम् प्रजानां पतिः ज्ञानेनानुपभोग्यं स्थानम् तत्र ते गच्छन्तीत्यभिप्रायः । भाः प्रकाशमात्रं सूर्यस्तृयम् ॥१०॥ प्राङ्गनिरीक्षणेन संतर्पिता गच्छन्तो देवा निरीक्षिता भवन्तीत्यभिप्रायः ॥१३॥ उपगम्य उद्धता (!) पितुर्व्यादिता वाभ्यो ढक् [पा° ४.१.१२०.] ॥१६॥ प्रदक्षिणमावर्तते ॥१७॥ असलाया वाल्यः स्थूरः तत्रासलायमात्रं लभ्यते स्थूरोऽस्मिन्नस्तीति स्थूरो न स्थूरी अस्थूरी । ससहायानि ॥१९॥ पुत्रार्हितश्चेन्मृतपुत्रा वा तथा इदं मे कर्मेदं वीर्यं देवदत्तोऽहं संतनवानीति नामग्रहणम् ॥२१॥ see १.१.६. ॥२३॥ समाप्तोऽयं पौर्णमासिकः

सर्वास्विष्टिषु पशुबन्धेषु यागेषु सौत्रामण्यां प्रकृतिभूतः । यद्यप्ययं (? यथाथोयं A. यथार्थयं C.) कृताधानस्य भवति तथापि आधानेष्टीनां तनूहविःसंज्ञकानां पौर्णमासिको यागः प्रकृतिः तस्मात्पूर्वमुपदेश्यः । ननु तर्हि तनूहविषामेव सर्वेष्टिप्रकृतित्वं (°तत्वं A. C.) कृत्वा तान्येव पूर्वं कस्मान्नोपदिष्टानि सत्यम् किं तु तेष्वितिकर्तव्यताविकृत्यदर्शनात्सार्वप्रकृतित्वं न संभवति तस्मात्पौर्णमासयाग एव पूर्वमुपदिष्टः ॥ ॥ आचार्यहरिस्वामिनः कृतौ शतपथभाष्ये हविर्यज्ञेषु नवमो (अष्टमो AC.) ऽध्यायः समाप्तः ॥ ॥

---

## VARIOUS READINGS AND CORRECTIONS OF THE PRESS.

---

अध्याये १ ब्राह्मणे १ कण्डिकायाम् १ M. B. C read प्राङ्विष्ठ° instead of °ङ्क्ति° and so is the general usage of Vedic manuscripts: see Benfey »die Hymnen des Sâmaveda Leipzig 1848. Brockhaus« p. XLVIII. I have retained this manner of writing only in the Nomin. mascul. of the themata terminating in ञ्. - ३ न्वेवो M apograph. - १० °दुपचं Sây. - १७ निर्दहन्ति M. - २. ७ निर्ममे Sây. B. निर्ममे Sây. A. C. but निर्मिमा ३. १. २१. - ८ °र्वाध-धस्ताद्° Sây. - १२ °ताद्रात° MBC. °ताद्रात° Sây. which reading I now prefer: see ४. ३. १८. - ३. ५ °तिपप्लुविरे Sây. - ४. १ °वत्साया° M. - १६ वर्धयति M. B. C unaccented against पा° ८. १. ५६. — अध्या° २. ब्रा° १. क° ८. रुक्तामप° M. - १५ क्लिनसाव M. °सातऽइ°? - २. ७ प्रवृत्स्यादि° M. - ६ तन्न I. ११ त्तएवन्ति MBC. क्लिएवन्ति Sây. see ७. ४. १६. and ६. ३. ६. - ३. १ अप्रदनवो I. देवा अन्विष्य Sây. - ४. १६ क्रूरं कु° Sây. - ५. ५ °मनुरिति M. - ६ निपात्य Sây. - ९ पाखिल्यङ्गुलामिव M apograph. - २० वज्रो ह I - २२ प्रह्लामीति M apogr. - २३ अस्याः क्रूरमभूत्तस्या एतद्° Sây. — अध्या° ३. ब्रा° १. क° ७. °रतः संमा° B

prima manu. °रतः संमा° B sec. manu. C. M. See पा° ८. १. ६३. - ११ °द्रवे-दिति Sây. - २० °दाय प्राडुदाद्रवति M. °दाद्रूति coni. त्पत्नी नाव्नरेति M apogr. - २५ रसस्यो वैव I. B prima m. - २. ७ °भृति चतुर्धुत्रायाम् coni. - ३. ३ प्रयहंति M. B. C. °ह्नति I. - ११ पूर्वाधी वे M apogr. - ५. १२ म ते Sây. against the accent, for the mspts have द्वैव, not द्वैव; सते is Datif Part. Praes. — अध्या° ४. ब्रा° १. क° १०. विद्व्य° M. माधव° Sây. - १३ निष्येदे M apogr. - १४ मदा-नीरित्युत्तरेन निर्धारयति Sây.! - २१ त्रिगाब्सति M apogr. °घांसति Sây. - २५ °तिर्व्रणा° M. B. C sec. manu. = घृ? - २१ इडे° M apogr. ईडेन्य° Sây. see ४. ३. ५. - ३३ तृच° Sây. त्रिच° MBC. - ३५ सुक्रतुर्ग° BC. M sec. m. सुक्रतुर्य° M prima m. - ३१ °न्धिढ्ढ instead of °न्धिड्ढ see ४. ३. १८. - २. १७ °नुष्या C. B. and Sây. - ३. १६ °मुगघ्न° M. °मुयघ्न° I. B. C. घ is my coniecture. - १८ उघ्राय M. B. C. and Sây. उक्षाय I. उदूध्माय is my coniecture. ध्म is very often given in the mspts by घ्र: see Benfey p. XLVII. - ४. १३ °ह्णीति and ५. १२ °ह्नि in all the manuscripts: see Benfey p. XXXIV. - ५. ११ the accent allows to consider प्रतिप्रश्नं either as a bahuvrîhi, or as an avyayîbhâva: the latter menning is understood by Sâyana. - १३ वा यस्मिन्वा in all the mspts. Sâyana seems to read वान्यस्मिन्वा. — अध्या° ५. ब्रा° १. क° ६. and २६ अनुष्या C. and Sây. - २० क्षोत्रवर्ये I. - २५ उदोषिष्टं has lost the augment after मा, else it should be read उदौषिष्टं. - २. १ वेत्र° M. B. C. क्षौत्र° Sây. - ११ °रात्स वषट्कारेणा° Sây. - ३. ६ वे संक्रा° M apogr. संगतयोः Sây. - ११. Sây. reads त्तुल्लकं. - १७ मित्र आग° Sây. — अध्या° ६. ब्रा° १. क° १. अन्तर्यात I. - ४ इन्वतो M. B. C. - ११ जयं जयति M. B. C. The final न् is changed very

often in the manuscripts into Anusvâra: see Benfey p. XXXVII. XXXVIII. वेव्ह M. °यथा यथास्य M. apogr. - २१ सतः is Gen. Part. praes., Sây. reads सदः. - ७.२ पथ्यमास M. C prima manu. ज्यमास C sec. m. B. I. - ४ समर्थेवा° M. सर्थ्ये B. C. समर्थे I. The mspts use to have र्क्कं. र्त्त. र्प्प instead of र्क. र्त. र्प. - तममृजस्त M. apogr. तम° is my coniecture. - ३. १ दनायुः Sây. - १६ संव्लीनः M. संव्लीनः I. संल्लीनः Sây. संलीनः Sây. and my coni. - १७ मा आकुरु Sây. against the accent. उदरेणायुध्यत्त° Sây. - १८ °ज्ञतऽइति M. ज्ञतमिति C. B. I. - २२ इन्द्रस्येश्वा दे° Sây. — अध्या° ७. ब्रा° १. क° १. अपाधस्ता Sây. अपादस्ता means either: *the archer Apâd*, or: *an insidiator* from the root दसु उपक्षये धा° २६. १०४. - ३ द्वितीयोऽयतीति M. apogr. ऽयती° is my coni. - १० °त्वा भवत्य° M. - २. १३ निदग्धं Sây. - १८ अधस्ताल्ल° Sây. - ३. १० °मयालग्नि° Sây. - ११ सम्रे Sây. आपदीति M. apogr. अपदिति Sây. - २१ °द्रुद्रेण प्रभू° Sây. - ४. १२ प्रज्ञह्तित Harisv. — अध्या° ८. ब्रा° १. क° १. अवनिह्यमु° Har. - ७ चकार M. चचार I. B. पिव्दमाना Har. - ९ याममुया M. apogr. यामु मया coni. - २५ °त्यवोपह्वयेतोपह्नतेडोपह्नतेडेति चे°? coni. - २. ५ सत्तृवान् Har. - ३. २१ ह्रोतृव्हलामा° M. ह्रोत्रे दकलामा° I. ह्रोत्रेऽह्व° coni. see ७. १. ११. - २२ ने न त्व° M. नेत्व° I. C. नेत्व° coni. see Benfey p. XLVII. - २६ यतो ह्वोवं M. apogr. - २७ तत्सादयति coni. — अध्या° ९. ब्रा° १. क° १ सूक्तानि तदाह Har.? - २ क्युक्का M. apogr. क्युक्ता coni. - ४ दिवस्पथिव्योरि° M against पा° ६. २. १४२. दिव° coni. - ५ शंघवी M on both times. शंगवी I. C. नाद Harisv. - २. २० °ध्यवित्यशी° M. against the rule. - ३. ११ ज्ञयं ज्ञयति the mspts. see ६. १. १९. -

१६ वाव see शान्तनाचार्य° ४.१४ वावादीनामुभावुदात्तौ. Boehtlingk »über den Accent im Sanscrit §. 2« reads erroneously वावा. —

*Read:* पत्र १. पङ्क्ति १३ °मानुष-इव. २.१४ यज्ञमेवै°. २० ऽइति. २२ तत. ३.१५ °लानि च. ४.१ स्मऽर्षयो. १० एव गृ°. ११ °स्ताड्°. १३ ऽएन°. १७ कैनमे°. १८ तद्-भ्याद्. २१ °ताद्धानमनसो. ६.५ ऽ-इवै°. १६ ऽभिप्रसुभाव सर्वत-इव. ७.२२ पक्षाः. ८.८ ऽग्रस्ये. किं च. ९ संज्ञानीते. ९.६ °मेवैत°. १०.३ °ताऽ-सं°. ५ वर्धयति. १० किं च. ११ °क्क एव. २२ ऽउपालभतऽउपेव. १२.१ वैतराणि. ४ °देवमभ्यू°. १४ साव इ°? १५ °कुम्यया. १३.७ °मेकं. १४.३ ऽउभा°. ५ जायते. १३ जाण्वस्ति. १८ वा. २२ भेषी°? १५.१८ ऽउ. २२ देवाः. १६.६ हविर्हविरेव. २०.२२ पशुम°. २१.१० °यँश्चन्द्र°. २२ °जिरि. २२.१५ निर्णि°. २७.२ and ४ °क्वैत. ९.१०.१४ धु°. १५ तु? २८.४ °सा-. १६ न्वापि°? २९.४ स्यां. ३०.१०.१२.१३.१४.१९ °न्द्वे. ३१.१४ °त्र-मेवै°. २० °न्द्वे. ३२.२ °गृह्णोत्येव. ३.४.६ °न्द्वे. ९ °भि संपा°. १५.१९ °चऽर्त°. १८ °धेनोः. ३३.४ वशः. ३४.२१ स्मेतां? ३७.४ °वऽर्चा°. ३८.१८ °हृऽर्षि°. ४०.४ प्र व इति. ४२.१६ युञ्जन्ति. ३४.१२ °त्रैव. ४६.२२ मोदांपिष्टं. ४७.१ मो-. ४९.७ °दनय-न्ये. २२ वै स क्राम°. ५०.१ °गामेव. २ कुर्यात् ।. ६.७ यज-य°. ५१.२ °तु-ष्य°. °तु-वे°. २२ and ५२.१९ °क्रा-स्वा°. ५३.७ °नाऽ हि. १० तन्मि°. १२ and १९ °स्व-प°. ५८.११ याभि सं°. ६०.१६ यं-यम°. ७०.८ य एष. ७२.१० वै स. ७९.१६ कुता°. ८५.१७ यन्नि°? ९०.१० °घत्स°. १४ °यमिताऽ. ९४.९ °दर्वाड् क्रमेत. —



ओम् । स यद्वा ऽइतश्चेतश्च सम्भरति । तत्सम्भाराणाꣳ सम्भारत्वं यत्र-यत्राग्ने-
र्न्यक्तं ततस्ततः सम्भरति तद्यशसैव त्वदेवैनमेतत्समर्धयति पशुभिरिव त्वन्मिथुने-
नेव त्वत्सम्भरन् ॥१॥ अथोल्लिखति । तद्यदेवास्यै पृथिव्या ऽअभिष्ठितं वाभिष्यूतं
वा तदेवास्या ऽएतदुद्धृत्याथ यज्ञियायामेव पृथिव्यामाधत्ते तस्माद्वा ऽउल्लिखति ॥२॥
अथाद्भिरभ्युक्षति । एष वा ऽअपाꣳ सम्भारो यदद्भिरभ्युक्षति तद्यदपः सम्भरत्यन्नं
वा ऽआपो ऽन्नꣳ हि वा ऽआपस्तस्माद्यदेमं लोकमाप ऽआगच्छन्त्यथेहान्नाद्यं जायते
तदन्नाद्येनैवैनमेतत्समर्धयति ॥३॥ योषा वा ऽआपः । वृषाग्निर्मिथुनेनैवैनमेतत्प्रज-
ननेन समर्धयत्यद्भिर्वा ऽइदꣳ सर्वमाप्तमद्भिरेवैनमेतदाप्त्वाधत्ते तस्मादपः सम्भरति ॥४॥
अथ हिरण्यꣳ सम्भरति । अग्निर्ह वा ऽअपो ऽभिदध्यौ मिथुन्याभिः स्यामिति ताः
सम्बभूव तासु रेतः प्रासिञ्चत्तद्धिरण्यमभवत्तस्मादेतदग्निसंकाशमग्नेर्हि रेतस्तस्माद-
प्सु विन्दन्त्यप्सु हि प्रासिञ्चत्तस्मादेनेन न धावयति न किं चन करोत्यथ यशो
देवरेतसꣳ हि तद्यशसैवैनमेतत्समर्धयति सरेतसमेव कृत्स्नमग्निमाधत्ते तस्माद्धि-
रण्यꣳ सम्भरति ॥५॥ अथोषान्त्सम्भरति । असौ ह वै द्यौरस्यै पृथिव्या ऽएतान्प-
शून्प्रददौ तस्मात्पशव्यमूषरमित्याहुः पशवो ह्येवैते साक्षादेव तत्पशुभिरेवैनमे-
तत्समर्धयति ते ऽमुत आगता अस्यां पृथिव्यां प्रतिष्ठितास्तमनयोर्द्यावापृथिव्यो रसं
मन्यन्ते तदनयोरेवैनमेतद्द्यावापृथिव्यो रसेन समर्धयति तस्मादूषान्त्सम्भरति ॥६॥
अथाखुकरीषꣳ सम्भरति । आखवो ह वा ऽअस्यै पृथिव्यै रसं विदुस्तस्मात्ते ऽधो
ऽध इमां पृथिवीं चरन्तः पीविष्ठा अस्यै हि रसं विदुस्ते यत्र ते ऽस्यै पृथिव्यै रसं

विदुस्तत उत्किरन्ति तदस्याऽएवैनमेतत्पृथिव्यै रसेन समर्धयति तस्मादाखुकरीषꣳ सम्भरति पुरीष्य इति वै तमाहुर्यः श्रियं गच्छति समानं वै पुरीषं च करीषं च तदेतस्यैवावरुद्ध्यै तस्मादाखुकरीषꣳ सम्भरति ॥७॥ अथ शर्कराः सम्भरति । देवाश्च वाऽअसुराश्चोभये प्राजापत्याः पस्पृधिरे ता हेयं पृथिव्यलेलायद्यथा पुष्करपर्णमेवं ताꣳ ह स्म वातः संवहति सोपैव देवाञ्जगामोपासुरान्त्सा यत्र देवानुपजगाम ॥८॥ तदोचुः । हन्तेमां प्रतिष्ठां दृꣳहामहै तस्यां ध्रुवायामशिथिलायामग्नीऽआदधामहै ततोऽस्य सपत्नान्निर्भक्ष्याम इति ॥९॥ तद्यथा शङ्कुभिश्चर्म विहन्यात् । एवमिमां प्रतिष्ठाꣳ पर्यबृꣳहन्त सेयं ध्रुवाशिथिला प्रतिष्ठा तस्यां ध्रुवायामशिथिलायामग्नीऽआदधत ततोऽस्य सपत्नान्निरभजन् ॥१०॥ तथोऽएवैष एतत् । इमां प्रतिष्ठाꣳ शर्कराभिः परिबृꣳहति तस्यां ध्रुवायामशिथिलायामग्नीऽआधत्ते ततोऽस्य सपत्नान्निर्भजति तस्माच्छर्कराः सम्भरति ॥११॥ तान्वाऽएतान् । पञ्च सम्भारान्त्सम्भरति पाङ्क्तो यज्ञः पाङ्क्तः पशुः पञ्चऽर्तवः संवत्सरस्य ॥१२॥ तदाहुः । षडेवऽर्तवः संवत्सरस्येति न्यूनमु तर्हि मिथुनं प्रजननं क्रियते न्यूनाद्वाऽइमाः प्रजाः प्रजायन्ते तद्धैश्रेयसमुत्तरावत्तस्मात्पञ्च भवन्ति यद्यु षडेवऽर्तवः संवत्सरस्येत्यग्निरेवैतेषाꣳ षष्ठस्तथोऽएवैतदन्यूनं भवति ॥१३॥ तदाहुः । नैवैकं चन सम्भारꣳ सम्भरेदित्यस्यां वाऽएते सर्वे पृथिव्यां भवन्ति स यदेवास्यामाधत्ते तत्सर्वान्त्सम्भारानाप्नोति तस्मान्नैवैकं चन सम्भारꣳ सम्भरेदिति तदु समेव भरेद्यदेवास्यामाधत्ते तत्सर्वान्त्सम्भारानाप्नोति यदु सम्भारैः सम्भृतैर्भवति तदु भवति तस्मादु समेव भरेत् ॥१४॥ ब्राह्मणम् ॥१॥

कृत्तिकास्वग्नीऽआदधीत । एता वाऽअग्निनक्षत्रं यत्कृत्तिकास्तद्वै सलोम योऽग्निनक्षत्रेऽग्नीऽआदधाति तस्मात्कृत्तिकास्वादधीत ॥१॥ एकं द्वे त्रीणि । चत्वारीति वाऽअन्यानि नक्षत्राण्यथैता एव भूयिष्ठा यत्कृत्तिकास्तद्भूमानमेवैतदुपैति

तस्मात्कृत्तिकास्वादधीत ॥२॥ एता ह वै प्राच्यै दिशो न च्यवन्ते । सर्वाणि ह वाऽअन्यानि नक्षत्राणि प्राच्यै दिशश्च्यवन्ते तत्प्राच्यामेवास्यैतद्दिश्याहितौ भवतस्तस्मात्कृत्तिकास्वादधीत ॥३॥ अथ यस्मान्न कृत्तिकास्वादधीत । ऋक्षाणाᳬ ह वाऽएता अग्रे पत्न्य आसुः सप्तऽऋषीनु ह स्म वै पुरऽर्क्षा इत्याचक्षते ता मिथुनेन व्यार्ध्यन्तामी ह्युत्तराहि सप्तऽर्षय उद्यन्ति पुर एता अशमिव वै तद्यो मिथुनेन व्यृद्धः स नेन्मिथुनेन व्यृध्याऽइति तस्मान्न कृत्तिकास्वादधीत ॥४॥ तद्वेव दधीत । अग्निर्वाऽएतासां मिथुनमग्निनैता मिथुनेन समृद्धास्तस्मादिव दधीत ॥५॥

रोहिण्यामग्नीऽआदधीत । रोहिण्याᳬ ह वै प्रजापतिः प्रजाकामोऽग्नीऽआदधे स प्रजा असृजत ता अस्य प्रजाः सृष्टा एकरूपा उपस्तब्धास्तस्थू रोहिण्य इवैव तद्ध रोहिण्यै रोहिणीत्वं बहुरेव प्रजया पशुभिर्भवति य एवं विद्वान्रोहिण्यामाधत्ते ॥६॥ रोहिण्यामु ह वै पशवः । अग्नीऽआदधिरे मनुष्याणां कामᳬ रोहमिति ते मनुष्याणां काममरोहन्यमु हैव तत्पशवो मनुष्येषु काममरोहंस्तमु हैव पशुषु कामᳬ रोहति य एवं विद्वान्रोहिण्यामाधत्ते ॥७॥ मृगशीर्षेऽग्नीऽआदधीत । एतद्वै प्रजापतेः शिरो यन्मृगशीर्षᳬ श्रीर्वै शिरः श्रीर्हि वै शिरस्तस्माद्योऽर्धस्य श्रेष्ठो भवत्यसावमुष्यार्धस्य शिर इत्याहुः श्रियᳬ ह गच्छति य एवं विद्वान्मृगशीर्षऽआधत्ते ॥८॥ अथ यस्मान्न मृगशीर्षऽआदधीत । प्रजापतेर्वाऽएतच्छरीरं यत्र वाऽएनं तदविध्यंस्तादिषुणा त्रिकाण्डेनेत्याहुः स एतच्छरीरमजहाद्वास्तु वै शरीरमयज्ञियं निर्वीर्यं तस्मान्न मृगशीर्षऽआदधीत ॥९॥ तद्वेव दधीत । न वाऽएतस्य देवस्य वास्तु नायज्ञियं न शरीरमस्ति यत्प्रजापतेस्तस्मादिव दधीत पुनर्वस्वोः पुनराधेयमादधीतेति ॥१०॥ फल्गुनीष्वग्नीऽआदधीत । एता वाऽइन्द्रनक्षत्रं यत्फल्गुन्योऽप्यस्य प्रतिनाम्न्योऽर्जुनो ह वै नामेन्द्रो यदस्य गुह्यं नामार्जुन्यो वै नामैतास्ता एतत्परोऽक्षमाचक्षते फल्गुन्य इति को ह्येतस्यार्हति गुह्यं नाम ग्र-

हीतुमिन्द्रो वै यजमानस्तस्य स्वऽएवैतन्नक्षत्रेऽग्नी आधत्तऽइन्द्रो यज्ञस्य देवता तेनो
हास्यैतत्सेन्द्रमग्न्याधेयं भवति पूर्वयोरादधीत पुरस्तात्क्रतुर्हैवास्मै भवत्युत्तरयो-
रादधीत श्वःश्रेयसꣳ हैवास्माऽउत्तरावद्भवति ॥११॥ हस्तेऽग्नीऽआदधीत । य इ-
च्छेत्प्र मे दीयेतेति तद्धाऽअनुष्ठ्या यद्धस्तेन प्रदीयते प्र हैवास्मै दीयते ॥१२॥ चि-
त्रायामग्नीऽआदधीत । देवाश्च वाऽअसुराश्चोभये प्राजापत्याः पस्पृधिरे तऽउभयऽए-
वास्मिंल्लोकꣳ समारुरुत्सां चक्रुर्दिवमेव तेऽसुरा रौहिणमित्यग्निं चिक्यिरेऽने-
नास्मिंल्लोकꣳ समारोक्ष्याम इति ॥१३॥ इन्द्रो ह वाऽईक्षां चक्रे । इमं चेद्वाऽइमे
चिन्वते तत एव नाऽभिभविष्यन्तीति स ब्राह्मणो ब्रुवाण एकेष्टकां प्रवृह्योपाय
॥१४॥ स होवाच । हन्ताहमिमामप्युपदधाऽइति तथेति तामुपाधत्त तेषामल्प-
कादेवाग्निरसंचित आस ॥१५॥ अथ होवाच । एन्वाऽअहं तां हास्ये या ममेहे-
ति तामभिपद्याववर्ह तस्यामावृढायामग्निर्व्यवशशादग्नेर्व्यवशादमन्वसुरा व्यवशे-
रुः स ता एवेष्टका वज्रान्कृत्वा ग्रीवाः प्रचिच्छेद ॥१६॥ ते ह देवाः समेत्योचुः ।
चित्रं वाऽअभूम यऽइयतः सपत्नानवधिष्मेति तद्वै चित्रायै चित्रात्वꣳ चित्रꣳ ह भ-
वति हन्ति सपत्नान्हन्ति द्विषन्तं भ्रातृव्यं य एवं विद्वांश्चित्रायामाधत्ते तस्मादेतत्क्ष-
त्रिय एव नक्षत्रमुपेप्सेदभिघाꣳसतीव ह्येष सपत्नान्त्सीव जिगीषति ॥१७॥ नाना
ह वाऽएतान्यग्रे क्षत्राण्यासुः । यथैवासौ सूर्य एवं तेषामेष उद्यन्नेव वीर्यं क्षत्र-
मादत्त तस्मादादित्यो नाम यदेषां वीर्यं क्षत्रमादत्त ॥१८॥ ते ह देवा ऊचुः ।
यानि वै तानि क्षत्राण्यभूवन्न वै तानि क्षत्राण्यभूवन्निति तद्वै नक्षत्राणां नक्षत्रत्वं
तस्मादु सूर्यनक्षत्रऽएव स्यादेष ह्येषां वीर्यं क्षत्रमादत्त यदु नक्षत्रकामः स्यादे-
तद्वाऽअनपरद्धं नक्षत्रं यत्सूर्यः स एतेनैव पुण्याहेन यदेतेषां नक्षत्राणां कामयेत
तदुपतिष्ठेत्तस्मादु सूर्यनक्षत्रऽएव स्यात् ॥१९॥ ब्राह्मणम् ॥२॥

वसन्तो ग्रीष्मो वर्षाः । ते देवा ऋतवः शरद्धेमन्तः शिशिरस्ते पितरो य ए-

वापूर्यतेऽर्धमासः स देवा योऽपक्षीयते स पितरोऽहरेव देवा रात्रिः पितरः पुनरह्नः पूर्वाह्णो देवा अपराह्णः पितरः ॥१॥ ते वाऽएतऽऋतवः । देवाः पितरः स यो हैवं विद्वान्देवाः पितर इति ह्वयत्या हास्य देवा देवहूयं गच्छन्त्या पितरः पितृहूयमवन्ति हैनं देवा देवहूयेऽवन्ति पितरः पितृहूये य एवं विद्वान्देवाः पितर इति ह्वयति ॥२॥ स यत्रोदगावर्तते । देवेषु तर्हि भवति देवांस्तर्ह्यभिगोपायत्यथ यत्र दक्षिणावर्तते पितृषु तर्हि भवति पितॄंस्तर्ह्यभिगोपायति ॥३॥ स यत्रोदगावर्तते । तर्ह्यग्नीऽआदधीतापहतपाप्मानो देवा अप पाप्मानꣳ हतेऽमृता देवा नामृतत्वस्याशास्ति सर्वमायुरेति यस्तर्ह्याधत्तेऽथ यत्र दक्षिणावर्तते यस्तर्ह्याधत्तेऽनपहतपाप्मानः पितरो न पाप्मानमपहते मर्त्याः पितरः पुरा हायुषो म्रियते यस्तर्ह्याधत्ते ॥४॥ ब्रह्मैव वसन्तः । क्षत्रं ग्रीष्मो विडेव वर्षास्तस्माद्ब्राह्मणो वसन्तऽआदधीत ब्रह्म हि वसन्तस्तस्मात्क्षत्रियो ग्रीष्मऽआदधीत क्षत्रꣳ हि ग्रीष्मस्तस्माद्वैश्यो वर्षास्वादधीत विड्ढि वर्षाः ॥५॥ स यः कामयेत । ब्रह्मवर्चसी स्यामिति वसन्ते स आदधीत ब्रह्म वै वसन्तो ब्रह्मवर्चसी हैव भवति ॥६॥ अथ यः कामयेत । क्षत्रꣳ श्रिया यशसा स्यामिति ग्रीष्मे स आदधीत क्षत्रं वै ग्रीष्मः क्षत्रꣳ हैव श्रिया यशसा भवति ॥७॥ अथ यः कामयेत । बहुः प्रजया पशुभिः स्यामिति वर्षासु स आदधीत विड्ढि वर्षा अन्नं विशो बहुर्हैव प्रजया पशुभिर्भवति य एवं विद्वान्वर्षास्वाधत्ते ॥८॥ ते वाऽएतऽऋतवः । उभयऽएवापहतपाप्मानः सूर्य एवैषां पाप्मनोऽपहन्तोद्यन्नेवैषामुभयेषां पाप्मानमपहन्ति तस्माद्यर्हिवैनं कदा च यज्ञ उपनमेदथाग्नीऽआदधीत न श्वःश्वमुपासीत को हि मनुष्यस्य श्वो वेद ॥९॥ ब्राह्मणम् ॥३॥

यदहरस्य श्वोऽग्न्याधेयꣳ स्यात् । द्विवैवाश्नीयान्मनो ह वै देवा मनुष्यस्याजानन्ति तेऽस्यैतद्धोऽग्न्याधेयं विदुस्तेऽस्य विश्वे देवा गृहानागच्छन्ति तेऽस्य गृहे-

बूपवसति स उपवसथः ॥१॥ तन्न्वेवानवक्लृप्तं यो मनुष्येष्वनश्नत्सु पूर्वोऽश्नीयादथ
किमु यो देवेष्वनश्नत्सु पूर्वोऽश्नीयात्तस्मादु दिवैवाश्नीयात्तदपि काममेव नक्तमश्नी-
यान्नो ह्यनाहिताग्नेर्व्रतचर्यास्ति मानुषो ह्येवैष तावद्भवति यावदनाहिताग्निस्त-
स्मादपि काममेव नक्तमश्नीयात् ॥२॥ तद्धैकेऽजामुपबध्नन्ति । आग्नेयी वाऽजाऽग्नेरेव
सर्वत्वायेति वदन्तस्तदु तथा न कुर्याद्व्यस्तातः स्याद्योधऽएवैनं प्रातर्दद्यात्तेनैव
तं काममाप्नोति तस्मादु तन्नाद्रियेत ॥३॥ अथ चातुष्प्राश्यमोदनं पचन्ति । छ-
न्दाꣳस्यनेन प्रीणामि इति यथा येन वाहनेन स्यन्त्स्यन्त्स्यात्तत्सूदितं कर्तवै ब्रूया-
देवमेतदिति वदन्तस्तदु तथा न कुर्याद्यदाऽअस्य ब्राह्मणाः कुले वसन्त्यृत्विजश्चा-
नृत्विजश्च तेनैव तं काममाप्नोति तस्मादु तन्नाद्रियेत ॥४॥ तस्य सर्पिरासेचनं कृ-
त्वा । सर्पिरासिच्याश्वत्थीस्तिस्रः समिधो घृतेनान्वज्य समिद्वतीभिर्घृतवतीभिर्ऋग्भि-
रभ्यादधति शमीगर्भमेतदाप्नुम इति वदन्तः स यः पुरस्तात्संवत्सरमभ्यादध्यात्स ह
तं काममाप्नुयात्तस्मादु तन्नाद्रियेत ॥५॥ तदु होवाच भाल्लवेयः । यथा वाऽअन्य-
त्करिष्यन्त्सोऽन्यत्कुर्यादथान्यद्वदिष्यन्त्सोऽन्यद्वदेदथान्येन पथैष्यन्त्सोऽन्येन प्रति-
पद्येतैवं तद्य एतं चातुष्प्राश्यमोदनं पचेदपराद्धिरस्य सेति न हि तदवकल्पते य-
स्मिन्नृचा वा साम्ना वा यजुषा वा समिधं वाऽभ्यादध्यादाहुतिं वा जुहुयात्तं
दक्षिणा वा हरेयुरनु वा गमयेयुर्दक्षिणा वा कोऽनु ह्यन्वाहार्यपचनो भवि-
ष्यतीत्यनु वा गमयन्ति ॥६॥ अथ जाग्रति जाग्रति देवाः । तद्देवानेवैतदुपावर्त-
ते स देवतरः श्रान्ततरस्तपस्वितरोऽग्नीऽआधत्ते तदपि काममेव स्वप्यान्नो ह्य-
नाहिताग्नेर्व्रतचर्यास्ति मानुषो ह्येवैष तावद्भवति यावदनाहिताग्निस्तस्मादपि का-
ममेव स्वप्यात् ॥७॥ तद्धैकेऽनुदिते मथित्वा । तमुदिते प्राञ्चमुद्धरन्ति तदुभे
ऽअहोरात्रे परिगृह्णीमः प्राणोदानयोर्मनसश्च वाचश्च पर्याप्त्याऽइति वदन्तस्तदु त-
था न कुर्यादुभौ हैवास्य तथानुदितेऽआहितौ भवतोऽनुदिते हि मथित्वा तमु-

दिते प्राञ्चमुद्धरन्ति स य उदितऽआहवनीयं मन्थेत्स ह तत्पर्याप्नुयात् ॥८॥ अ-हर्वै देवाः । अनपहतपाप्मानः पितरो न पाप्मानमपहते मर्त्याः पितरः पुरा ह्यायुषो म्रियते योऽनुदिते मन्थत्यपहतपाप्मानो देवा अप पाप्मानꣳ हतेऽमृता देवा नामृतत्वस्याशास्ति सर्वमायुरेति श्रीर्देवाः श्रियं गच्छति यशो देवा यशो ह भवति य एवं विद्वानुदिते मन्थति ॥९॥ तदाहुः । यन्नऽर्चा न साम्ना न यजुषा-ग्निराधीयतेऽथ केनाधीयतऽइति ब्रह्मणो हैवैष ब्रह्मणाधीयते वाग्वै ब्रह्म तस्यै वाचः सत्यमेव ब्रह्म ता वाऽएताः सत्यमेव व्याहृतयो भवन्ति तदस्य सत्येनै-वाधीयते ॥१०॥ भूरिति वै प्रजापतिः । इमामजनयत भुव इत्यन्तरिक्षꣳ स्वरिति दिवमेतावद्वाऽइदꣳ सर्वं यावदिमे लोकाः सर्वेणैवाधीयते ॥११॥ भूरिति वै प्र-जापतिः । ब्रह्माजनयत भुव इति क्षत्रꣳ स्वरिति विशमेतावद्वाऽइदꣳ सर्वं याव-द्ब्रह्म क्षत्रं विट् सर्वेणैवाधीयते ॥१२॥ भूरिति वै प्रजापतिः । आत्मानमजनयत भुव इति प्रजाꣳ स्वरिति पशूनेतावद्वाऽइदꣳ सर्वं यावदात्मा प्रजा पशवः सर्वे-णैवाधीयते ॥१३॥ स वै भूर्भुव इति । एतावतैव गार्हपत्यमादधात्यथ यत्सर्वे-णादध्यात्केनाहवनीयमादध्याद्धुऽअन्तरे परिशिनष्टि तेनोऽएतान्ययातयामानि भ-वन्ति तैः सर्वैः पञ्चभिराहवनीयमादधाति भूर्भुवः स्वरिति तान्यष्टावक्षराणि स-म्पद्यन्तेऽष्टाक्षरा वै गायत्री गायत्रमग्नेश्छन्दः स्वेनैवैनमेतच्छन्दसाधत्ते ॥१४॥ दे-वान्ह वाऽअग्नीऽआधास्यमानान् । तानसुररक्षसानि ररक्षुर्नाग्निर्जनिष्यते नाग्नी आधास्यध्वऽइति तद्यद्रक्षꣳस्तस्माद्रक्षाꣳसि ॥१५॥ ततो देवा एतं वज्रं ददृशुः । यदश्वं तं पुरस्तादुदश्रयंस्तस्याभयेऽनाष्ट्रे निवातेऽग्निरजायत तस्माद्यत्राग्निं मन्थि-ष्यन्त्स्यात्तदश्वमानेतवै ब्रूयात्स पूर्वेणोपतिष्ठते वज्रमेवैतदुच्छ्रयति तस्याभयेऽनाष्ट्रे निवातेऽग्निर्जायते ॥१६॥ स वै पूर्ववाट् स्यात् । स ह्यपरिमितं वीर्यमभिवर्धते यदि पूर्ववाहं न विन्देदपि य एव कश्चाश्वः स्याद्यद्यश्वं न विन्देदप्यनड्वानेव

